# उपग्रन्थसूत्रम्

## अथ प्रथमः प्रपाठकः

अथ सम्पत्सिद्धिरनादेशे स्तोत्रीयान्तः शते विशेषः संख्यासमस्ताख्ये प्रत्येकमर्थाद्विनियमो ज्योतिष्टोमे नव तमुक्थ्ये त्रिपञ्चाशे द्वाचत्वारिꣳशानि चत्वार्यतिरात्रे सवनानां भक्तिवादश्छन्दस्तोभभक्षयस्थानदैवतैर्यानि सप्त चतुरुत्तराणीति गायत्रीजगत्यौ द्वे बृहत्यावुष्णिक्त्रिष्टुभौ च द्वे पङ्क्त्यनुष्टुभौ सैव सप्तमी यैरुक्थ्यैश्च छन्दोभिरिति षष्टिस्त्रिष्टुभस्तासाꣳसिद्धिस्त्रयो-विंशतिर्गायत्र्यः पञ्चचत्वारिꣳशतम् बृहत्यो द्वादश ककुभश्चतसृभिर्गायत्री-भिस्ता बृहत्यः स्त्राः सप्तपञ्चाशतं तावत्यक्षराणि गायत्र्यस्तैस्तास्त्रिष्टुभस्ति-स्त्रश्चौशने पुरोजित्यां दशपद्यापदान्यनुष्टुप् शिरसश्चाक्षर्य्याशीत्यक्षरङ्गो आयुषोः पूर्वस्यैकचत्वारिꣳशे परस्यैकान्नषष्ठे न्यूनातिरिक्ता वेवꣳ समानां विराजꣳ सम्पद्येते चत्वारि त्रिꣳशान्यतिरात्रयोरष्टादशायुषोधिकाः पञ्च-द्विषष्ठान्यतिरात्रे गायत्री सम्पन्ने तासाꣳ सिद्धिः १

ह्यूनं प्रकृत्या गायत्र्यः सप्त पञ्चाशतं बृहत्य स्ताः पञ्चाशीतिर्द्वादशाक्षरं च चतुर्नवतिरुष्णिक् ककुभस्ता नवशतꣳ षोडशाक्षरं च षड्त्रिष्टुब्जगत्यो बृहत्यतिशेषेण द्वादश सप्तोने नार्मेधोत्तमया सार्द्धमनुष्टुभस्ता द्वे षष्टिर्द्यूना चोष्णिक् ककुब्भ्याꣳ शेषेणाभिजिद्विश्वजितोश्चत्वारिꣳशे पञ्चैकान्नविꣳशा-न्यतिरात्रयोर्न्नते द्विषष्टिः शिरःपक्षपुच्छानां परिमाद्भिस्त्रयः पञ्चविꣳशाः साहस्त्रे विꣳशतिस्त्रिवृतो दशाधिका बृहती चैका विराजस्ते चत्वारो-क्षर्यास्त्रिवृतः परे द्वे साहस्त्रोत्तमर्षभयोर्द्वा नव तं ताः षडनुष्टुभः साद्यस्के-ष्टशतन्तास्तिस्त्र ऋगक्षरा बृहत्यो विराट्परयोर्विꣳशं पूर्वस्याध्यर्द्धमुत्तरे चतुर्विꣳशतिरेकत्रिके २

वाजपेयविचाराः सप्तदशाश्चतुस्त्रिꣳशदतिरात्रे त्रिवृत् सप्तदशाव्युष्टौ सप्तविꣳशानि राज्येष्टावेकविꣳशाः परे विꣳशौपशदे द्वादशाधिकाः प्रकृतेरग्नेः स्तोमे चैकोद्भिद्बलभिदैन्द्राग्नेषु चतुश्चत्वारिꣳशन्ताः षड्गाय-त्र्यस्तिस्त्रो जगत्यस्त्रीण्यपचित्युत्तरे विघनसन्दꣳशयोः षोडशैताः षड्बृह-ताश्चतुर्विꣳशतिस्त्रिवृतस्ताः सन्दꣳशे त्रिवृतꣳ स्तोमꣳ सम्पद्यते बृहती-च्छन्द इति बृहतीच्छन्द इति ३

चैत्ररथे पूर्वस्याह्नस्त्रिपञ्चाशे चत्वार्यष्टाचत्वारिꣳशान्युत्तरस्य समस्तयोः सप्तैकाधिकानि जामदग्ने प्रत्यहं जगत्यस्तिस्रः षट् सप्तैकादश पौण्डरीकेः षट्शतꣳ षट्त्रिꣳशा दशमेऽनुष्टुप्पारोद्दयं चतुःसप्तति सातिच्छन्दः समानसे तासाꣳ सिद्धिः षडनुष्टुभः प्रकृत्या त्रयस्त्रिꣳशच्चैकाधिका न ह्येकस्मादिति पञ्च षष्ठं गायत्र्यस्तास्त्रयोविꣳशं गायत्री चाशीतितिरेकोना बृहत्यस्ता अष्टाशीतिःककुन्मात्रा च षट् त्रिष्टुब्जगत्यो नवोष्णिक्ककुभस्तिस्रो द्विपदा गायत्र्यतिश्शेषश्च न्यूनातिरेकैरेकोनाविꣳशतिस्ताश्चतुरक्षरश्चातिच्छन्दस्त्रि-श्चतुरक्षरेण ताः पञ्चानुष्टुभो ज्योतिर्विचारेष्वक्षरतः प्रकृतेर्यावद्यावद्वर्धते तावदन्यस्माद्ग्रसते तस्मादिति निर्देशो वृद्धिह्रासयोस्तदिति ह्रासे प्रजातिकामयज्ञे निर्म्मध्योर्ध्वꣳ होतुःपृष्ठात्सम्पत्सिद्धिर्ज्योगामयादिसैस-वसाहस्रप्रतिरूपेषु रथन्तरात् षोडशह्रासास्तद्वद्धं ब्रह्मायतनीया षष्टिर-भिचरतो वषट्कारणिधनाद्विभ्रष्टापहारयोः श्रायन्तीयाच्चतुर्विंशतिस्तत्र-याणां कालेयाद्यज्ञायज्ञीयबहिष्पवमाने षडक्षरसंसङ्गात्तदुष्णिक्ककुभोः ४

आर्षेयेनोक्थप्रणया व्याख्यातास्तेषां सिद्धिर्नार्मेधा त्रीण्यष्टाक्षराण्य-भ्यस्तादेकविंशतिश्चतुरक्षराणि परयोर्ह्यक्षराण्युत्तरे समानोभ्यास उत्तमे त्रीण्युष्णिग्भ्यश्चतुरक्षराणि लुप्यन्ते सप्ताक्षराणि पंक्तिभ्यस्तदेकया पंक्त्या सम्पादयेदभ्यस्ते चैवं दरणे श्रायन्तीयवषट्कारणिधनाभ्याञ्चतुश्चत्वा-रिꣳशत्तत्कालेयोष्णिक्ककुब्यज्ञायज्ञीयेभ्योऽतिरेके प्रातःसवनात् पञ्चदश गायत्र्यस्तत्पृष्ठानां ब्रह्मसामाच्छावाकसाम्नोर्माध्यन्दिनात्सप्तदश बृहत्य-स्तद्गायत्रसंहितसफश्यावाश्वान्धीगवयज्ञायज्ञीयेभ्यस्तस्यानुव्याख्या चत-स्रः प्रकृत्या बृहत्यस्तद्गायत्र्योऽनुष्टुभश्चाष्टौ ककुभोऽष्टाक्षरञ्च काकुभ-मानुष्टुभञ्च द्वादशाक्षरं ककुभोऽनुष्टुब्भ्यां सिद्धां द्वादशाक्षरेण गायत्र्यो-ऽष्टाक्षरेण शेषस्त्रिवृत्प्रमानेष्टौ गायत्र्य आज्येभ्यः सप्तदशाष्टाक्षराणि श्रायन्तीयात्सप्तदश द्वादशाक्षराणि वैखानसात्तस्यानुव्याख्या वैखान-सातिशेषेण बृहत्यः सिद्धाः ककुभोश्च मध्यमौ पादौ श्रायन्तीयेना-नुष्टुभोऽष्टाक्षरञ्च काकुभमाज्यशेषः कण्वरथन्तरे ककुभौ सम्पत्सि-द्धिस्तृतीये साहस्रप्रतिरूपे पूर्ववदवलोपस्तत् कौत्सवरुणसाम्नोर्वृद्धं परयोरक्षरसंसङ्गा द्वे तदुष्णिहः पुरोहितकुलीनयोर्द्वादशाष्टाक्षराण्याकूपा-

रात्तत् पृष्टानां ब्रह्मसाम्नस्तत्पृष्ठानां ब्रह्मसाम्नः ५

अथातः प्रायश्चित्तान्युद्गातर्य्यवच्छिन्नेऽदक्षिणः स यज्ञक्रतुः सं हि स्थाप्य इति क्रतुदक्षिणानां प्रतिषेधं प्रतियन्ति नाङ्गदक्षिणानां पुरा हि सर्पण-कालादङ्गदक्षिणाः शश्वदेकेऽध्वर्य्यवोऽधीयते तासु दत्तास्वदक्षिणत्वं नोपपद्यत इत्येतेन पाञ्चदाक्षिण्यं व्याख्यातमेतेन सार्ववेदसं क्रतुदक्षिणाना-मेवैतत्परिमाणं भवति नाङ्गदक्षिणाभिः सार्द्धमित्यथैतत्सार्ववेदसिकं प्रायश्चित्तं सर्ववेदसदक्षिणेष्वनुपपद्यमानं मन्यन्ते नित्यतान्न हि नित्येन प्रायश्चित्तार्थ उपपद्यत इति तत्र दक्षिणावन्ति प्रायश्चित्तान्यहर्गणेष्वनुप-पद्यमानानि मन्यन्त एकꣳ ह्यहः क्रतुभूतमविकृताति भवन्ति न पुन-रहर्गणेष्वेकमहः क्रतुभूतं विद्यते तत्रैकस्याह्नो भ्रेष इतरेषामभ्रेषे भेषजः कल्पो नोपपद्यत इत्यथाप्यूर्ध्वं प्रथमादह्नो नैवादाक्षिण्यमुपपद्यते न पाञ्चदाक्षिण्य-मिति । तदु चेद्ब्रूयुरथवैतदेवाह दक्षिणं स्यात्तस्य चैव पुनः सूतिः स्यादिति स दीक्षोपसत्कस्य वै क्रतोः प्रकृतौ पुनः स्तुतिमामनतीति ब्रूयात्तेनैतन्नोपपद्यत इति ६

अथ तच्छ्रायन्तीयं यज्ञविभ्रष्टस्य ब्रह्मसामाम्नातं तदन्वहमहर्गणेषु स्यादित्येके श्रायन्तीयं ब्रह्मसामेति ह्याह श्रायन्तीयं ब्रह्मसामेति चोक्ते किमन्यदन्वहकरणादेव प्रतीयामेति तदेतदुपयत्स्येताग्निपावमानी चेदार्षेयकल्पोऽन्वहकृत्यामवक्षत्तां वेकस्मिन्नेवाहनि कृत्या माहितेन मन्यन्ते श्रायन्तीयमप्येकस्मिन्नेवाहनि स्यादित्यथाप्युपपद्यत एवैष श्रायन्तीयादेश एकस्मिन्नेवाहन्यसम्भवाद्विपूर्वापरयोराम्नाययोः पूर्वस्य प्रत्याम्नायो भवतीति क उ खलु विभ्रꣳश इति यः कश्च भ्रेष इत्येके तदेतन्नोपपद्यते संस्थां ह्येवं यज्ञक्रतुरापद्येत सर्वेषु चेदवरोधेषु पुनःस्तुतिरेव स्यात्पञ्चैव विभ्रꣳशा भवन्तीत्यौद्गाहमानिरुद्गातुरवच्छेदः सोमापहरणं सोमाभिदहनं सोमातिपवनं क्रतुविलोप एव पञ्चम एतेषु हि पुनः सूतिराम्नातः संयुक्त नु खलु पुनः सूतिर्विभ्रꣳशेत हि यस्मिन् ह्येव यज्ञक्रतौ विभ्रꣳशेत सैव तस्य प्रायश्चित्तिरिति हि भवतीति कियति कालात्यये विलोपो भवतीति यत्राग्निहोत्राहुती अन्योन्यस्याः स्थानमापद्येते यत्र दर्शपूर्णमासौ यत्र वापि कृत्स्नं सुत्याहः परस्याह्नः स्थान मापद्येतैकाहो वा

परमादिरित्याहरिति तदु चेद् ब्रूयुर्यत्किञ्च कर्त्तान्यस्य कर्म्मण स्थानमापद्येत विलोम एवैवं वादस्य स्यात्तदेव मनवस्थाविलोपानाऽ स्यादिति तत्र ब्रूयात् पूर्वपक्षादिस्थानस्यामावास्यस्यापरपक्षापादने विलोप मध्वर्य्येव ग्रामनन्त्यपरपक्षादिस्थानस्य पौर्णमासस्य पूर्वपक्षापादने हरादिस्थानायाः प्रातराहुते रात्र्यापादने रात्र्यादिस्थानायाः सायमाहुतेरहरापादन एतेन मन्यन्तेऽहरवराध्य्ये वा कालात्यये विलोपो भवतीति नित्यं ज्याय-स्यभिजानन् ह्ययं न हरन्तरात् कालात्ययानेतदवराध्र्ये विलोप माम्रासीदिति ७

यदि सत्राय दीक्षेरन्नथ साम्युत्तिष्ठेत्सोममपभज्य विश्वजितातिरात्रेण यजेत सर्ववेदसेनेति भवति स खलु विश्वजिन्न कामादुत्तिष्ठतः स्याद्यत्र त्वेनं ससत्रिणो बाधोऽन्यत्र वा यजो विलोपः स्याद्यत्र वैनन्तद्रूपो व्याधिः स्पृशेद्येनान्तः सत्रं प्रायणाच्छङ्केतवदुत्थाय विश्वजितातिरात्रेण यजेत कामापत्तिषु किं प्रायश्चित्तं विधीयत इति तदु चेद् ब्रूयुः पश्यामो नापदि कामादुत्थानं यथा दशसु मासेषु गवां षट्सु वातवतः सप्तदशेद्यो नैमिशीयानामित्यवेलायां वै खलु वा तृचानां पद एवोदस्था-स्यद्विलोपानुपवादरूपं ह्यस्य ब्राह्मणमथ ये गावश्च नैमिशीयाश्च वेलायाञ्चेत्पर्वण एवोदस्थास्यन्नृषयो ह्येव गावो बभूवुस्तथा नैमिशीया ग्रार्षस्तु खलु सर्वत्र प्रमाणं भवत्यथापि सिद्धिमेव गवामामनति तथा नैमिशीयानां नो खलु विलोपे सिद्धिमाम्नास्यदिति तदु चेद् ब्रूयुर्यो नः प्रजायामृध्यातै स एतत् सत्रं समापयादिति विलोपानुवादरूपं ब्राह्मण-मित्युपपद्यते वा एतदविलोप एव ब्राह्मणं वेला हि यत् प्रजायै ज्यायः सत्रपर्वा साशिष्यन्त इति ते खल्वेते द्वे पर्वणी सत्रे यथा त्रिपर्वा ज्योतिष्टोमश्चतुष्पर्वाणि सारस्वतानि तादृशमेतद्भवति ८

स खलु विश्वजिन्नदीक्षाभ्यनुत्तिष्ठतः स्यादित्येके सोमापभागेन जानो-मोऽक्रीतो हि दीक्षासु सोमो भवतीत्यपि दीक्षाभ्य इत्याचार्याः साम्युत्थानकारितो हि भवतीति यद्वेतत्सोमापभागेन जानीम इति क्रीते सोमे संयुक्तो भवति नाक्रीते तद्यथा विश्वजिता धर्मा एकाहेऽहःसंयुक्ता भवन्ति नाहर्गणेषु तादृशमेतद्भवति तत्र कथं सोमक्रय इति न विद्यत इत्येके

विश्वजिति चेद् द्विः क्रेतव्यो भविष्यत् किमर्थः सोमापभाग-मान्नास्यदित्यथापि सोमसंस्कारार्थः सोमक्रयो भवति सोऽयं पुरस्तादेव संस्कृतो भवतीति क्रत्वङ्गलोपोऽक्रीयमाणे सोम इत्याचार्याः क्रेतव्य एवेत्यथाप्याह सर्वस्मा एव दीक्षते सर्वमाप्नोतीति स योऽन्यादीक्षोपसद आमनन्नथान्यं सोमं न क्रीणीयाद्व्याघातरूपोऽन्यस्मिन् सुक्रीते सात्रिकं सोममपि सृजेयुर्यद्वेतत्किमर्थः सोमापभागमाम्नास्यदिति सत्रसमाप्तिमेतेनो-पाप्नुवन्मन्यत एवं पश्यामः साद्यस्केषु सद्यस्कृते सत्याज्ये दार्त्तेयस्यापि सर्गात् सद्यस्त्वमाम्नायमानं तादृशमेतद्भवति यदि चापि सोमसꣳस्कारार्थः सोमक्रयोऽभविष्यत् क्रीते सोमेऽपहृतेन्यः पुनः क्रेतव्योऽभविष्यदपुनः क्रयणमु खलु दर्शयति स खल्वेकस्योत्तिष्ठत आम्नातस्तं त्वर्थसामान्यात् सर्वेषामप्युत्तिष्ठतां प्रतीमः प्रतीमः ९

यदि पर्यायैरस्तुतमभिव्युच्छेदिति तत्त्वर्थसामान्यादप्येकस्मिन् पर्य्याये प्रतीमोऽपि द्वयोरभिविवासाच्छङ्कमाना इत्यार्षेयकल्पोऽनभिवासार्थो हि रात्रिसꣳरोधो भवति यद्वेतदभिव्युच्छेदिति ब्राह्मणमप्येष विभक्त्यपनिपात एव स्यादभिव्युच्छेदिति त्वेव शाट्यायनिब्राह्मणं तथा भाल्लबिनां तथा भालबविनां तथा तैत्तिरीयाणां कथꣳ सर्वेषां विभक्त्यपनिपात एव स्यादथापि चेदनभिविवासार्थो रात्रिसꣳरोधोऽभविष्यदपरिमितः स्तोमो-ऽभविष्यदथा नाभिविवसेत्तथा स्तुवीरन्नित्यभविष्यन्नह्यन्नभिविवासार्थे रात्रिपरिमाणमुपपद्यते ते तु परियाणेनैव स्तोमस्य जानीमो व्युष्टा संयुक्त एवायं कल्पो भवतीति क उ खलु गर्गत्रिरात्रे प्रथमस्य रात्रिषाम्नः स्तोमः स्यादिति पञ्चदश इत्येके पञ्चदशभिर्होत्रैस्तुयुः पञ्चभिः पञ्चभिरितरेभ्य इति ह्याहेति तदेतन्नोपपद्यते पश्यामः प्राकृतान् कल्पान् प्रायहृतैरन्वा-भ्नायमानान्ययैतदजोऽग्नीषोमीय ऐन्द्रामारुता उक्षाणो मारुत्यो वत्सत-र्यश्वक्री वत्सदश्वक्रीवद्धविर्द्धानमिति चैतेन मन्यन्ते पञ्चदशभिर्होत्रैस्तु-युरित्यपि प्रायहृतैरेवान्वाम्नातो भवति तस्मात् षोडश एव स्यात् १०

अथ खल्ववर्वाक्सूवातिष्ठवौपरं स्तोत्रमधिकृत्य भवत स्तोत्रार्थसा-मान्यात्समानस्तोत्रेऽपि प्रतियन्ति प्रथमे चेत्पर्यायेऽतिष्टुतꣳ स्यादुत्तरयोः प्रतिनिरस्येयुः पूर्वयोर्वातिष्टुतमुत्तमे चेदतिष्टुवन्तो विगीतायाꣳ स्तोत्रायां

प्रस्तुतायां बुद्धेरन्नसमाप्यैव तां विरसेयुर्न च तेनातिष्टुतं मन्येत यद्यर्वाक् स्तुयुर्यावतीभिर्न्न स्तुयुर्यद्यतिष्टुयुर्यावतीभिरतिष्टुयुरिति हि भवतीति कृत्स्नानां स्तोत्रीयाणामधिकारो भवति न स्तोत्रीयेतरार्थानामित्यर्वाक् सुतश्चेत्त्वजपिता स्वच्छिद्रासु बुध्येरंस्तुवीरन्नेव ताभिः स्तोत्रीयाभिरिति मन्यन्ते व्यवायो हि स्तोत्राङ्गैः स्तोत्रस्य न्याय्यन्तरो यथा चेत्स्तोत्री-यालोपोऽथाप्येवꣳ सत्युत्तरꣳ स्तोत्रं यथाप्रकृति भवत्यथेतरथोभे एवा-यथाप्रकृते भवतस्तावतीभिर्वातिष्टुयुर्भूयोऽक्षराभिर्वेति सच्छन्द्रस्या अधिकृता मन्यन्त एवमिव च ह्येतस्य वाक्यस्यार्थो भवत्ययने तञ्च प्राकृता-च्छन्दोयोगाद्भवति तद्यथा स्वारत्रीडयोः क्रियमाणयोर्नैवाक्षरसामान्या-त्साम्यमुपपद्यते न छन्दःसामान्यात्साम्यं तादृशमेतद्भवति समानस्तोत्रे चेन्नु स्तोत्रीयाविपर्यासः स्यात्कृतः स गणयितव्य आनुपूर्व्यार्थे न ह्यभ्या-वर्त्तमनि स्तोमातिरेकः स्यान्न चानुपूर्व्यं न व्यवाप्येत तत्र सर्वप्रायश्चित्तमेव स्यात् ११

ते चेदस्तुते गायत्रेण सꣳहितस्यैकस्याꣳ स्तोत्रीयायाꣳ स्तुतायां बुध्येरंत्ससमापयेयुरेव संहितमिति मन्यन्ते स्तोत्रसम्बद्धानि हि नाना सामानि पवमानेषु भवन्त्यवान्तरसम्बन्धस्तृवस्थꣳ साम बाह्यतर उ खलु सम्बन्धो व्याहन्तव्यतरो यथा चेदवान्तरसम्बन्धोऽथापीतरथा द्व्यृचे संहितं पुनः प्रयोगे भवति तद्व्यृचे साम विद्यत इति तदु चेद्ब्रूयुरथ वै गायत्रस्य च सन्निपातः स्यात्सफस्य च तज्जामि स्यादिति विद्यते जामिकल्प इत्याहुर्व्रतेषु च गर्भिषु च तद्यद्विद्यते तदेव संशये प्रत्येतव्यमित्यथ यत्तस्मिꣳस्तोत्रे द्रव्यं न विद्यते चेत्प्रमत्ताः स्तुवीरन्न च तेनातिष्टुतं मन्येत नित्यानां ह्ययं द्रव्याणामधिकारो भवति नानित्यानां न ह्यनित्यानां लोपे प्रायश्चित्तमा मनतीति ब्रूयादश्चापि यः सर्वेषां द्रव्याणामधिकारं मन्येत सर्वेषामपि स्तोमानामधिकारं मन्येत तस्यैवं नार्वास्तवातिष्ठवौ स्यातामथ खलु विद्वांस्तोमं संसुनुयादित्येके कामापत्तिषु हि प्रायश्चित्तं विधीयत इति नाविदुषां संसव उपपद्यत इत्यौद्दाहमानिर्न हि ज्ञानाविषये संसवः स्याद् दीर्घत्वादध्वनो विद्वांस्त्वेव संसुनुयाद् यत्रासꣳसुन्वन्यज्ञात्ययाच्छङ्केत यद्वेतदकामापत्तौ प्रायश्चित्तमिति पश्यामो न कामापत्तौ प्रायश्चित्तं

यथाहिताग्नेः प्रवासजामिष्टिं तादृश मेतद्भवति १२
महति रात्रेः प्रातरनुवाकमुपाकुर्यात्पूर्वो वाचं पूर्वश्छन्दांसि पूर्वो देवता वृङ्क्ते पूर्वेऽभिषुणुयुरिति तां न पूर्वचिकीर्षां मन्येतैवं पूर्वकल्पस्त्वेवैष भवति यद्धि पूर्वचिकीर्षा भविष्यत् पूर्वे प्रातरनुवाकमुपाकुर्युरित्यभविष्यत्त तु कालनियोगात्प्रातरनुवाकस्य जानीमो न पूर्वकरणात् पूर्ववादा भवन्तीति यश्चापि पूर्वकरणमुक्तं मन्येताशक्यमाने स पूर्वकरणेन प्रायश्चित्तं कुर्यात्परेषां हि देवतासु परिगृहीतासु देवतापरिगृतीतार्थं प्रतिजानानः कस्मात्कुर्यात्तदन्वह महर्गणेषु स्यादित्येके हरश्चेत्सꣳ सूयेतेति क्रत्वादावेवेत्यौद्गाहमानिस्तच्छ्रायन्तीयेनैव व्याख्यातं तत्र व्यूढेष्वहःसु स्युस्त्रिष्टुब्जगतीरेव वृषण्वतीः कुर्य्यादिवं प्रायश्चित्तं च कृतं भवति व्यूहश्चानुगृह्यत इति नियुक्ता वा आर्षेयकल्पेन वृषण्वत्यो भवन्तीति चेज्ज्योतिष्टोमे ता नियुक्ता भवन्तीति ब्रूयात् तद्यथा सर्वाणि प्रायश्चित्तानि ज्योतिष्टोम आम्नायमानानि सर्वत्रगाणि प्रतियन्त्येवमप्येतद्वृषण्वद्रूपं ज्योतिष्टोमेषु नियुक्तं सत्सर्वत्रगम्प्रतीमोऽथापि य एनाः सर्वत्रगा मन्येत षष्ठे दाशरात्रिकेऽचिक्रदद्वृषाहरिति सञ्चारयेद्बहिष्पवमाने चार्भवे च न पुनः समानाहनि स्तोत्रीयासञ्चारो विद्यतेऽन्यत्र विद्यमानात्तदेतन्नोपपद्यते यदि ह्येना ज्योतिष्टोमे नियुक्ता मन्येत सर्वत्रैवैना नियुक्ता मन्येत न ह्येतदुपपद्यते समानस्यादेशस्यान्येषु क्रतुषु नियोगो भविष्यत्यन्येषु प्रयव इति यद्यु वै ज्योतिष्टोमेऽपि प्रयवं प्रतीयादन्येषामथादेशानां प्रयवम्प्रतीयाद्यथा स्वाराणामतिबृवे त्रीडानामर्वाक्सूवे वैष्णवीयानामनुष्टुभां कलशदरणे यामानां स्तोत्रिकल्पर्तुमिति ब्रुवन्नार्षेयकल्पमभिक्त्यामन्नेति ब्रुवंस्तदृशं व्याहन्यात्कस्माच्चन प्रायश्चित्तेन व्यूहो व्याहन्येताथैषस्तेहति प्रतिपदमेव वृषण्वतीं कुर्यादसञ्चाराय विकल्पो ह्येवैष भवति प्रतिपद्वा वृषण्वती कार्या सवनमुखेषु चेति सवनमुखेषु चेति १३

इति उपग्रन्थसूत्रे प्रथमः प्रपाठकः

अथ द्वितीयः प्रपाठकः

हरिः ॐ

यदि सोममक्रीतमपहरेयुरन्यः क्रेतव्य इत्थेतावदेतद्भवति तत्र न प्रायश्चित्तं विद्यते दीक्षित आगमयेतासोमलाभादपि गिरिन्धावेयुरित्यपि शाट्या-यनिब्राह्मणं यदि क्रीतं योऽन्योऽभ्यासꣳ स्यात्स आहृत्यो न दूरादाहृत्यो न ह्युपसदां विकर्षो विद्यत इतीवार्थो भवति स खल्वोत्तमा दाप्यायनकाला दागमयितव्य इति मन्यन्ते प्रत्यक्षाभिषवो हि ज्यावान् भवत्याथायमानानां यथास्थानकरणादिति तद्यद्येतत्प्रत्यक्षोऽधिगम्येत यदि परोक्षो नैवैनं पुनः क्रीणीयात्पूर्वस्यैव हि स क्रयणक्रीतो भवति सोमविक्रयिणे तु किञ्चिद्द्यान्न पुनः क्रेतव्य इति वार्थो भवति कौत्साय तु किञ्चित्कं देयमिति शाट्यायनिब्राह्मणं तच्चेद्यजुष्कृते परोक्षे प्रत्यक्षोधिगम्येत परोक्षेणैव वर्त्तयेयुरिति मन्यन्ते न हि यजुष्कृतस्यापघातो विद्यत इति प्रत्यक्षालाभादेव हविष्यः परोक्षो भवतीत्यपरं प्रत्यक्षमेव प्रयुञ्जीरन्नित्यथाप्यन्याय यो यत्संवत्सरं वा परोक्षेणैव वर्त्तयेयुरिति यद्वेतन्न यजुष्कृतस्यापघातो विद्यत इति पश्यामो यजुष्कृतानां मात्राव्यापादादहविष्यानाम्नायमानात् पञ्च-शारदीये यथा ते मात्राव्यापादीदहविष्या भवन्त्येवमपि प्रत्य-क्षेऽधिगतेऽहविष्यः परोक्षो भवतीति स खल्वधिगमनां तदेव प्रत्यक्षं प्रयुञ्जीतानभिषुतश्चेत् परोक्षः स्याद्यद्यु वा अभिषुत उत्तरस्मिन्नभि-षवकालेऽभिषुणुयुरथ परोक्षमपो वाभ्यवहरेयुः सकृदेव वा सर्व मभिषुणुयुः तच्चेदनभिषुते परोक्षे प्रत्यक्षोऽधिगम्येत तत्र सर्वप्रायश्चित्तमेव स्यात् १

सन्निपाते हीतरदाम्नातं भवति क्रीतस्य चापहरणे परीक्ष्यभिषवे च तन्न विप्रयोगे कृत्यमथ खलु सत्रेभ्योपेयात्पाञ्चदक्षिण्यं साम प्रायश्चित्तं तु क्रियेतेत्येके तद्यथैतदहीनैकाहानां सत्राण्यापद्यमानानां दक्षिणा अपयन्ति तादृशमेतद्भवति न तु प्रायश्चित्तानामङ्गावलोपेन वृत्तिं पश्यामः कृत्स्नानि ह्येव तमर्थं साधयन्ति तद्यथा दरणप्रायश्चित्तमूर्ध्वं ब्रह्मसाम्नोऽतीतकालं ब्रुवते ब्रह्मसामात्यया देवमपि पाञ्चदक्षिण्यस्यासिद्ध्यै सामयोगोऽपि न सिध्येत्तत्र सर्वप्रायश्चित्तमेव स्यात्तच्चेत्तृतीयसवनात्सोममपहरेयुरामाध्यन्दिनात् सव-नादुपनिवृत्य माध्यन्दिने सवनेऽभिषूणुयुरिति मन्यन्ते न हि तृतीयसवने

सोमसंस्कारो विद्यत इति तदेतन्नोपपद्यते यदि ह्येनमापदो हेतोरसꣳस्कृतं पुरस्तान्माध्यन्दिने सवनेऽभिषोतव्यं मन्येताथैनमापदो हेतोस्तृतीयसवन एवाभिषोतव्यं मन्येत न च हि साधुकृतस्योपनिवृत्तिर्विद्यतेऽपि च तृतीयसवने तैत्तिरीयादृजीषाभिषवमामनन्ति पथो वा हिरण्योदकं वा प्रतिनिदध्यादित्यपरमेतौ ह्यनभिषवकाले सोमप्रतिनिधी भवत इति यदि तु पूतभृतिसोमसंस्रावो विद्येताथैतदेवं स्याद्यद्यु वै पूतभृदपि हृतः स्यादन्यमेवाभिषुणुयुर्न ह्यविद्यमाने सोमातञ्चने पयसि वा हिरण्योदके वा सोमत्वमुपपद्यत इति २

यदि कलशो दीर्य्येतेति भवति तमेके पूतभृदाधवनीययोरप्यधिकारं मन्यन्ते कलश इत्युक्ते सर्वेषाꣳ सोमधाराणां कतरमनुकतमं मन्येमहीत्यनियुक्तं तु पूतभृदाधवनीययोः कलशत्वं कुम्भाविति हि वयमधीमहेऽथापि पश्यामो द्रोणकलशमेवाधिकृतं यस्य कलश उपदस्यतीत्येतेन वचनेन पूतभृदा-धवनीययोरदीर्णयोरुपसदनं विद्यते यावान्ह्येतयोः सोमो भवति बहुरेव तावान्भवति तद्यदेव कलशो दीर्णः सिध्येत तदिदं प्रायश्चित्तं कृत्यं नैवादीर्णो सिच्यमानेनोप वा सिक्ते दीर्णेऽथ सोमातिरेकात्स्तोत्रोपजनः सवन-सꣳस्थास्वाम्नातो भवत्यग्निष्टोमातिरात्रयोश्च तत्त्वर्थसामान्यादितरास्वपि सꣳस्थासु प्रतीमः स खलु नाविद्यमानाꣳ सꣳस्थां प्रणयेत्तस्य तस्य क्रतोर्ज्योतिष्टोमं त्वधिकृत्य प्रायश्चित्तान्याम्नायन्ते तस्मादत्र ज्योतिष्टोमीः सꣳस्था अनुक्रामतीति द्विसꣳस्थस्य चेत्क्रतोः प्रकृतौ पूर्वस्याः सꣳस्थाया अतिरिच्येत द्वितीयां वा सꣳस्थां प्रणयेदेकस्तोत्रं वोपदध्यात् ३

तच्चेदुक्थसꣳस्था दतिरिच्येत विष्णोः शिपिविष्टवतीषु गौरीवित्तं चतु-र्थमुक्थं कुर्यादकृतं चेदहःकल्पे स्यादथ चेत् कृतमच्छावाकसामजातीयमेव शिपिविष्टवतीषु कुर्य्यात्तच्चेत् षोडशिसꣳस्थादतिरिच्येतं विष्णोः शिपि-विष्टवतीषु गौरीवितं द्वितीयꣳ षोडशिसाम कुर्यादकृतं चेदहःकल्पेस्यादथ चेत् कृतꣳ षोडशिसामजातीयमेव शिपिविष्टवतीषु कुर्य्यादथ वाजपेये कृतमेव गौरीवितं भवति कृताः शिपिविष्टवत्यस्तच्चेदन्यास्त्रिष्टुभः शिपि-विष्टवत्योऽधिगम्येरꣳस्तासु बृहन्निधनं वार्कजम्भं कुर्यात्कण्वबृहद्वा यद्यु वैन्न त्रिष्टुभोऽप्यन्यच्छन्दस्याः शिपिविष्टवत्यस्त्वेव यद्यु न शिपि-

विष्टवत्योऽपि वैष्णव्य एषा ह्येवात्र देवता प्रयुज्यते तच्चेद् बृहत्सन्धि-षाम्णोऽतिरात्रादतिरिच्येत विष्णोः शिपिविष्टवतीषु रथन्तरं द्वितीयँ सन्धिषाम कुर्याद् द्वितीयँ सन्धिषाम क्रियमाणं किमन्यद्रथन्तरादेव प्रतीयामोऽथाप्तोर्याम्णि गौरीवितमेव शिपिविष्टवतीषु कुर्यात्सद्धो हि तिरोरारात्रीणस्योपसञ्चार उपसञ्चारः ४

नेदिष्ठिनि दीक्षिते प्रेतस्यैव पूर्वपुरुषैः सह नामानि गृह्णीयुः संवत्सरेऽस्थीनि याजयेयुरिति भवति तमेक उभयोः प्रेतकल्पयोर्मन्यन्तेऽन्वयस्थाने ह्याम्नाता भवत्युत्तरस्यैवेत्यपरमेतदयुञ्ज्युर्य्युरिति हि पूर्वं कल्पमपवृज्योत्तरेण संयुज्या-म्नातो भवति स खलु संवत्सरे नियुक्तो भवति यद्यु हैनँ सत्रिणः कुर्य्युः सत्रान्तात्संवत्सरं गणयेयुर्यद्यु नेदिष्ठी प्रायणान्तादथ प्रायणञ्चान्तरेणा-स्थियाजनं च प्रेताग्नयो दीप्येरन्न त्वेतद्यदग्निहोत्रँ हूयेत न दर्श-पूर्णमासाभ्यामिज्येत प्राणावभृथे ह्येषोऽग्निहोत्राहुत्वोश्च दर्शपूर्णमासयोश्च सम्बन्धस्तस्मात्प्रेते कृत्येऽतो न आहारा न प्राणावभृथा भवन्ति तस्मात्ते प्रेता अपि समापयितव्या असन्नितँ स्तोत्रँ स्यादिति भवति तत्रैके-ऽसमीक्ष्यस्तोमस्यैतावत्त्वँ सुवीरं नित्यसम्मितं प्रतियन्त्युपपद्यते च यज्ञायस्त्वं कनीयस्त्वं च स्तोमानामपि प्रेत्यासम्मितं ब्रूयादेवमसम्मितं भवतीति न त्वेवैवं पर्यायधर्म आराध्यते नविष्टावधर्मो न ज्यौतिष्टोमानि च तक्सामान्यूर्ध्वं वै त्रिवृतो याथाकामी स्तोमानाँ स्यादित्यपरमेवमेत-त्सर्वमाराध्यत इति तत्र त्रिवृतः स्थाने दृशिप्रभृतीनां याथाकामी स्यात् षोडशप्रभृतीनां पञ्चदशस्याष्टादशप्रभृतीनाँ सप्तदशस्य द्वाविँशप्र-भृतीनामेकविँशस्येति ५

कलश उपदस्ते हिरण्यमेवापोऽभ्यवनयेद्धिरण्यमभ्युन्नयेदिति भवति द्रोणकलशे हिरण्यमवधाय तत्रापोऽभ्यवनयेयुर्हिरण्यमेव चमसेष्ववधाय तेष्वपोऽभ्युन्नयेयुः प्राणा वा आपोऽमृतँ हिरण्यममृत एवास्य प्राणान्दधाति स सर्वमायुरेतीति भवति नाराशँस उपवायते तस्याप्तुमवनयेदित्यल्पम-वनयेदित्यर्थं मन्यन्तेऽप्तुमिति हि शश्वद्दक्षिणाजा अल्पमाचक्षते यदि पीतामीतौ सोमौ सङ्गच्छेयातामिति हूताहूता वित्यर्थं मन्यन्ते न भक्षिताभक्षितौ न च ह्युच्छिष्टहोमो विद्यत उपपद्यते च हुताहुतयोरेव

पीतापीतत्वे हुते ह्येवाभक्षिते पीतवन्मन्त्रवर्णा भवन्ति यदेवेन्द्रपीतस्यत इन्द्रियावत इत्यथ खल्ववववृष्टभक्षोनाजानꣳश्छन्दो नादिशति तद्यस्य छन्दसः कालः स्यात्तच्छन्दसा भक्षयेयुरिति मन्यन्ते तदेतन्नोपपद्यते यद्ध्ये-वमभविष्यत्तच्छन्दस इति वाम्नास्यदच्छन्दस इति वा यथामुष्यराज्या-येत्यनाजानन्न राजानमामनत्यथापि विकृतो भवति तद्यथास्मिन्विकार एवमप्यस्मिन्न च्छन्दस्त्वाविकारोऽथापि चेदनाजानꣳश्छन्दो नादेक्ष्यदिदं पीतताममपि नादेक्ष्यत्स त्विन्दविन्द्रपीतस्येत्याहैते न मन्यन्ते प्रस्थित मधिकृत्यामनतीति प्रस्थितमु चेज्ञानत्किल्लैवच्छन्दो नादिशत्यच्छन्द-स्त्वादेव भक्षस्य यस्यो हेतोः प्रस्थितमधिकृत्यामनत्यन्वयस्थान आम्नातं सर्वस्तोत्रेषु प्रत्येष्यतीति ६

तत्र नाराशꣳसानामिन्दुरिन्दुमवागात्तस्य ते देवतः पितृभिर्भक्षितस्येति प्रातःसवने समानं परमौर्वैः काव्यैरिति परयोः सवनयोरथ षोडशिन इन्दुमवागात्तस्य ऐन्द्रं सहोसर्ज्जीति समानं परमथ सन्धिभक्ष इन्दुरिन्दु-मवागात्तस्य त इष्टयजुषस्ते देवसोमस्तुतः स्तोमस्येति समानं परमथ खल्वाज्येनाभ्युपाकृतस्य जुहुयादिति भवति यत्र सदसोऽनिर्हृतं नारा-शꣳसꣳ स्तोत्रेणाभ्युपाकुर्य्युस्तदिदं प्रायश्चित्तं कृत्य किमु खलु होतव्यमिति सोम इत्येक आज्येनाभ्युपाकृतस्य जुहुयादिति स्वाहाज्येनाभ्युपाकृते प्रायश्चित्तं जुहुयादित्यभविष्यन्न चेत्सोमाहुतिरभविष्यदनाचारस्त्वाग्नीध्रीये सोमाहुतीनां न चोच्छिष्टहोमो विद्यतेऽथापि वषट्कारप्रदानः सोमो भवति न च सोमः सोमदेवतो विद्यतेऽथाप्याज्येनाभ्युपाकृतस्य जुहुयादित्युक्ते किमन्यदाज्याहुतेरेव प्रतीयामेति तदु चेद् ब्रूयुराज्येन स्तोत्रेणेति वा वितस्याथो भवत्यत्र हि प्रथममभ्युपाकरणाद्भयं भवति यद्वा अशक्यं सर्वमधिकृत्याम्नातुं तदन्वयस्थान आमनतीति ब्रूयादथेदं स्तोत्राण्यधि-कृत्याम्नातं भवत्यथाप्येति कात्यायनीयानामध्वर्यूणां स्मृतिसूत्रं भवति यस्य चमसोऽभ्युपाकृतः स्यात्स एनमुत्तरसदसि चावस्थाप्य पूर्वया द्वारा सदसोपनिहृत्य पुरस्तादाग्नीध्रीयस्य निधायाज्यं जुहुयादिति यद्धेतदाज्ये नाभ्युपाकृतस्य जुहुयादिति ह्याज्येनाभ्युपाकृते प्रायश्चित्तं जुहुयादिति वा एतदुपपद्यते ७

सोमेऽभिदग्धे सोमभस्मन्यभिषुणुयुरित्यध्वर्युब्राह्मणमन्याभिरोषधिभिर-भिसंसृज्येतेति शाट्यायनिब्राह्मणमौदुम्बर्य्यां भग्नापहृतोत्खातदग्धप्ररू-ढायामन्यामाहृत्य तथैवावृतोच्छृत्योद्गाताग्नीध्रीयं गत्वा महाव्याहृतिभि-र्जुहुयादथ खलु न बहिरवभृथं यूपविरोहणे भ्रेषं मन्येतापि स कलशदरणे ग्रावापिशीरणे महावीरभेदन इति बहिरवमृथं भ्रेषं प्रतीयाद्य इहैवं मन्येताथ यत्र विप्रषिद्धप्रायचित्ता भ्रेषाः पूर्वापरे युगपत्सन्निपातेयुर्यथा पाञ्चदत्ति-णयस्योत्तरयोरवच्छेदयोः सन्निपातेऽसिद्धिप्रतिषिद्धानि तत्रोत्तराणि प्राय-श्चित्तानीति विद्यादथ चेत्सर्वे युगपद्विच्छिद्येरन्नसिद्धिप्रतिषिद्धान्येव तत्रोत्तराणि प्रायश्चित्तानीति विद्यादथ चेदनेको ग्रावापि शीर्येत पूर्वस्मिन्वाभिषवेऽपि चोभयोरुभयोर्वा सर्पणयोः प्रतिहर्त्तावच्छिद्येत यूपैकादशिन्यां वानेको यूपो विरोहेद्विभवेत् स्वित्तत्र सकृत्कृतं प्रायश्चित्तं विभवेदिति ब्रूयादेका ह्येव स्तोत्रीया हीयमानाऽतिष्टूयमाना स्वारं वा जनयति त्रीडं वाथ बह्वीषु सकृत् कृतमेव विभवेदित्येतैर्मन्यामहे बहूनपि समानजातीयभ्रेषात्सकृत्कृतमेव विभवेदित्येतेन ब्रह्मणः प्रायश्चित्तं व्याख्यातं सकृत् कृतमेव विभवेदिति तत्र याश्चाहुतयो महावीराभिमर्शनं च तद्ब्रह्मा कुर्यात्प्रायश्चित्तित्वादुद्गाता वा प्रकरणादध्वर्युकर्म्म त्वेवैतन्मन्यन्ते एष च हि भूतिष्ठानामाहुतीनां होता महावीरचरश्च भवत्यथापि नोद्गातुर्भुक्तसंशया सोमाहुतिर्विद्यते न ब्रह्मणो नो महावीरचराविव भवत इति भवत इति ८

पृष्ठानामनुकल्पः प्रथमेऽहनि रथन्तरप्रोक्ते त्रिणिधनमध्ये निधनयोः स्थाने तृचस्थे स्यातां प्रतिष्ठोक्तोहगीतिपृष्ठरहस्यापचित तस्माद् बृहद्रथन्तरे एकर्चे न कुर्वन्तीत्यैडङ्कावमत्यमेकस्या वैखानसं वेडानुग्रहदृष्टान्तात्स्तोमा-सम्भवोद्भिद्वलभिदेकत्रिकदर्शनैर्नित्यैर्वा सहैकर्चाः यज्ञगौङ्गवमध्यो वा बृहत्यां साम तृचो नित्ये अन्तरानुष्टुभि पृष्टौदले द्वौ प्रथमायाँ सर्व एकर्चास्त्रिणिधनमध्ये निधनानुग्राहवृत्तेः स्वारान्तं न्यायदृष्टेर्वैशालार्थोह-गीतिरेवं प्रायणीये त्रिवृति श्येने च तृचेषु पराणि स्तोमसम्भवो-हगीत्यादिभिरागन्तूनि प्रत्यहं दैर्घश्रवसमैधातिथपूर्वाभीशवहारायण-कौल्मलबहिषाणीहवद्वामदेव्य मयासोमीयं व्यूढे मार्गीयवं निधनवच्चेदा-

नुष्टुभान्यनुरूपाग्निष्टोमसाम्न आहीनिके स्वारे द्वितीयपञ्चमयोः शुद्धाशुद्धीयꣳ समूढे प्रावृषाभिनिधनवच्चेदागन्तुं संयोगेनैकर्च्चानित्यानुग्रहस्तोमोपपत्तेस्तृचा कार्य्या जामिस्थानपृष्ठान्वयवृत्तिदर्शनैरागन्तुं पृष्ठं चान्ते परिस्वानायां च प्रागन्त्यादिति त्रिषाक्ती चेदैडं चेदन्त्यं प्राग्द्वाभ्यां निधनवच्चेत्पृष्ठं तृतीये बृहत्यामाद्याद्विपरीते पञ्चमे चाज्येत्यतिकृत्य न्यायस्थमागन्तुं तृतीयेऽनुष्टुबन्त्येवागन्तुं बृहतीषष्ठे गौरीविताद्विपरीते व्यूढे ९

द्वितीयस्यार्भवे गायत्रमेकस्यामर्थादनुष्टुभावापसंक्रमोऽभिषेचनीयवत्तथोत्तरयोर्जामि चेदन्त्येनेत्यनयोर्मध्ये विपरीते व्यत्यासमेकर्चस्तृच इति चतुर्थे वा ककुवादयस्त्रय एकर्चास्तृचस्थानीतराणि षष्ठे द्विपृष्ठाभिमानितत्वात् पुरस्तादुपरिष्टादित्युभयोः स्वादुपाङ्क्यपृष्ठान्वाहार्य्यपृष्ठयोश्चैवं प्राक्यादिषु द्विसामत्वाच्छन्दस्यं वारवन्तीयं स्यादुभयोः पवमानानुकल्पः पृष्ठानुपूर्वेण स्तोत्रीयनानात्वाद्वा प्रत्यक्षपरोक्षास्त्रिः सामानादेशाच्चोभे पावमानिके रेवतीसंयोगाद्वारवन्तोयेन प्रत्यक्षार्थे दार्ढच्युते न परोक्षार्थे प्रत्यक्षाणीति प्रकृतिपृष्ठात्परोक्षाणीत्युभयतः पारोक्ष्यात् प्रत्यक्षपरोक्षकात्स्न्यार्द्विर्भिर्दर्शनाच्चैकतृचे वा प्रत्यक्षेषु विष्टुतीनां तृचाधिकारत्वादुभयेषां च दर्शनान्न तु पञ्चमे भेदान्न हि महानाम्नीष्वन्यदभीवर्त्तकालेयानुकल्प इति चेन्नोभयासम्भवादनवश्यकार्यत्वाच्च स्यात्तु विकल्पनियमात् सम्भवस्य प्रथमेऽहनि रथन्तराभीवर्त्तयीधाजयानि सामतृचोर्छाञ्जामिव्रतवद् गर्भिवत् सर्वे वैकर्चाः पञ्चबृहत्यां पञ्चगौङ्गवाभ्यां व्यवधा त्रीन् प्रथमायामेव द्वितीये तदादिबार्हताद्यादभीवर्त्त कालेये यथाजाति षष्ठे तु बृहच्चेत्स सामतृचस्ततोऽभिनिधनवत्पृष्ठं तृतीयपञ्चमयोर्गायत्रमेकस्यां द्वितीयपञ्चमयोर्द्वितीयतृतीययोः १०

विश्वजिति प्रज्ञाताः पृष्ठदेशास्तेषु तस्य तस्य षडहस्य पृष्ठान्न्यनुकल्पयेद् यथाभक्ति न पावमानिकानि पृष्ठव्यपदेशाः स्युः सुपुराभावाद्विश्वजिति चान्यत्र पृष्ठदर्शनादुभयसामान्यायत्वाच्चोक्त आवापसंक्रमो माध्यन्दिनापदेशानि गायत्रीबृहत्योर्यथोक्तमजामिक्रमेण विश्वजित्येव दर्शनात् सिमास्तिसृष्वन्त्यञ्चैवमेवार्भवे यज्ञायज्ञीयं न्याय्यानि च तृचेष्वपाङ्क्यपृष्टान्वाहार्य्यपृष्ठयोश्चैवं प्रत्यक्षाणाꣳ स्थाने परोक्षाणि बृहद्र-

थन्तरपुरस्तादुपरिष्टाज्ज्योतिषोर्गायत्र्यां जराबोधीयान्तः सामतृच एवमेक-द्व्यनुकल्पेरथन्तरबृहतीमैधातिथमध्यः सामतृचः प्रकृत्य शैष आर्भवे गाय-त्रमुष्णिक्ककुभौ वैकर्चाः सामतृचममितो रथन्तरबृहतीतृचयोः प्राङ्क्यादिषु यत्पूवꣳ स्तदादितो बृहत्यां पर्यायवदिति चेन्न ह्यृचा कार्यात्सञ्चराभ्याꣳ रेवत्योऽच्छावाकस्य वारवन्तीयं यत्तच्चेत्पृष्ठार्थे छन्दस्यद्विपदास्वेकतृचे त्वग्निष्टोमसामनी पार्ष्ठिकनिवृत्तेर्दैवतभेदादेशाच्चानुगृहीतबृहद्रथन्तरे नि-त्यकृतत्वादसञ्चाराच्चानुगृहीतपरोक्षतरे यथोक्तं माध्यन्दिन आर्भवे गायत्र्या मैडꣳ सौपर्णं सामतृचान्त्यमनुष्टुबाद्यं बृहत्या परोक्षं बृहद्रथन्तरपृष्ठस्य ११

साहस्राद्यात्पूर्वे सवने तृतीयाद्वाज्यानि श्यैतमिन्द्रक्रतावुष्णिक्प्रभृति-व्रतादेतस्मिन्नु पाङ्क्यपृष्ठान्वाहार्य्यपृष्ठी तन्नामधेयाद्गायत्र्यौ बृहत्यां वै-रूपादीनां परोक्षाणि सामतृचो नित्याद्येद्यतिहरेदजाम्यर्थेडारम्भणकृत-त्वादनुष्टुभिगौरीवितात्तृचस्थानीति चेत्पूर्व एकर्चानुगृहीतप्रत्यक्षे जरा-बोधीयस्य स्वारꣳ सौपर्णꣳ शक्वर्य्यो बृहत्यां समन्तस्य वैरूपं नित्यानुग्रह इति चेद्दैर्घश्रवसपूर्वयोर्मेधातिथसमन्ते आर्भवे ककुबादयस्त्रय एकर्चा गायत्र्यनुष्टुबन्त्ये आर्भवीये यथाच्छन्द एवमेवोत्तरे प्रत्यक्षाणां स्थाने परोक्षाण्यनुगृहीतप्रत्यक्षे वा नित्यः सार्वपृष्ठ्यादनुग्रहो हि यवा यतनं न्याय्यः कृतान्ताच्च सम्भार्य्याज्याद्यवारवन्तीयानि च पृष्ठसंयोगात्का-लेयवामदेव्ययज्ञायज्ञीयानां च्युतानुग्रहः साद्यस्केषु यथा शल्यनुगृहीत बृहद्रथन्तरे चैवं बृहन्नु पृष्टं बृहद्रथन्तरपृष्टत्वाद्वैराजमग्निष्टोमसामव्यत्य-यन्यायत्त्वात्तस्य स्तोत्रीयं निष्केवल्येऽनुशꣳसयेद्विराडनुग्रहाय च बृह-द्रथन्तरपरोक्षयोश्चोभयतः परोक्षार्थेऽभीवर्त्तकालेयेन्द्रक्रतुवन्नित्यइत्यनित्यः प्रधानविकारात् पृष्ठाग्निष्टोमसाम्नोर्यथायतनमिति न यथास्तोमं साद्य-स्काप्तोयाम्णोः कृतान्तादिति षडहे यस्तेनातिदेशाच्छिल्पे विश्वजि-त्तन्त्रव्यपदेशानुसञ्चाराच्चानुगृहीत बृहद्रथन्तरे दृश्यन्ते चोभयसामतन्त्रे सार्वपृष्ठ्यं यथाप्तोर्याम्णि तत्र चेद्गुणात्सम्मतेन १२

छन्दोमरुतस्तोमयोरनुकल्पः पृष्ठातिदेशा एकविꣳशत्यहेनार्थात् प्रतिषेधाच्च नोत्तराणि तनूपृष्ठे तदाख्यत्वाद्ब्रह्मसाम्नश्चैकसामान्यायत्वात् सꣳस्वा-रार्थान्युत्तराणि दविद्युतत्येत्युपवीतवत् स्युस्तु द्वादशपृष्ठदर्शनात्पुरस्ता-

ज्ञ्योतिर्ब्रह्मसाम्नि च पृष्ठदर्शनाच्छेनपुरोहितयज्ञयोस्तनूपृष्ठ इति प्राधान्यादेकसामान्यायत्वादिति बहूनि गर्भिषु वचसꣳस्कारार्थे सधर्माणि विष्टुत्यनुपपत्तेर्महावैष्टम्भमेवावापेष्वितराणि स्युः सुस्तृचस्य स्तोत्रीयास्थानसंक्रमकुलायिनी चतुष्टोमाग्निस्तोमसामदर्शनाद्विहृत्य स्तवने च विष्टुत्युपपत्तेः सप्तदशवत्त्रिर्हिङ्काराः कुशाविधानं च तस्य प्रयोगः पञ्चभ्यो हिङ्कृत्य महावैष्टम्भन्तिसृषु रेवत्य एतस्याꣳ रथन्तरमेकस्यां पञ्चभ्यो हिङ्कृत्य शक्वरीभिर्मध्यमः पर्य्यायः सप्तभ्यो हिङ्कृत्य वैराजमेकस्यां वैरूपन्तिसृषु बृहत्तिसृष्वपि वा सर्वेषां महावैष्टम्भमेव विष्टावो वैराजं मध्यम उत्तमो वैराजं मध्यम उत्तमः १३

इति उपग्रन्थसूत्रे द्वितीयः प्रपाठकः

अथ तृतीयः प्रपाठकः

हरिः ॐ

अथ खलु वैश्यस्य वर्णकल्पे काकुबुत्तर्य्यं कणवरथन्तरस्य सम्पदादिष्टं विद्याद्वैश्यस्य स्तोमे हि सर्वबृहतीषु भवत्यथ यज्ञायज्ञीयानुरूपे बहिष्पवमाने त्रिर्हिङ्कुर्य्युर्नासामत्वात् सकृदित्यपरं हिङ्कृत्य विकारात्सम्पदुपपत्तेर्य्यद्बहिष्पवमानꣳ सकृद्धिङ्कृताभिः पराचीभिः स्तुवन्तीति वोपपद्यते च हिङ्कारस्तस्या विशेषात् साम्ने साम्न इति चेन्न विशेषश्रुतेस्तस्य रथन्तरबृहत्पृष्ठं नौधसः श्यैतं ब्रह्मसामेति षोडशसाम्नि भवति तत्र खल्वाचार्य्या अर्द्धर्चशो गायन्ति रथन्तरस्य पूर्वं देशं बृहत उत्तरꣳ रथन्तरस्तोत्रीये नौधसस्य पूर्वं देशꣳ श्यैतस्योत्तरं नौधसस्य स्तोत्रीय एवꣳ षोडश सामा भवतीत्यन्यायः सामेतरार्द्धानां लोप इत्यौद्गाहमानी रथन्तरस्यैव स्तोत्रीये बृहद्रथन्तरे व्यत्यासꣳ स्यातां नौधसस्य श्यैतनौधसे यत्र हि त्रिवृत्पञ्चदश इति वा मनति बृहत्रथन्तरपृष्ठ्यः षडह इति वा व्यत्यासप्रयोग एव तत्र भवत्युपद्यते च यदेकसामीकृत्य स्तवनात् षोडशसामेत्यवद्व्यदथाभ्युभयसामायं भवति कृत्स्नाभ्यामेवोभयसाम्यमुपपद्यते न सामेतरार्द्धाभ्यामित्यथैके बृहद्रथन्तरं नाम समाधीयते तदिह प्रत्येतव्यं षोडशसामेति ह्याहाष्टादशसामा ह्यभविष्यद्बृहद्रथन्तरयोश्च श्यै-

तनौधसयोश्च क्रियमाणयोरिति तदेतन्नोपपद्यते न हि श्यैतनीधसं नाम सामाधीयते न पुनर्व्याहरते करणीये १
अथैतेषु प्रवर्हिषु सꣳशयः समूढाद्वा प्रत्येतव्या व्यूढाहेति समूढादित्याहुर्यो हीमान् हतृव्यूढान् प्रतीयादत्रिष्टुब्जगतीका अस्य स्तोत्रप्रबर्हाः सवनप्रबर्हाश्च स्युर्न्नो खल्वत्रिष्टुब्जगतीकमहः पश्यामोऽथापि सवनप्रबर्हाणां चतुर्थे चारयेद्यज्ञायज्ञीयं माध्यन्दिने सवने तृतीयसवने च न पुनः समानाहनि साम्नः सञ्चारो विद्यतेऽन्यत्र गायत्रादिति व्यूढादित्यपरं व्यूढो हि द्वादशाहस्य प्रकृतिः प्राकृतेनो एव प्रदेशा वर्त्तन्त इत्यथाप्यन्यायं परिजिहीर्षन्नन्यायमेवा पद्येत यद्वैननाननुकल्पेन प्रदिष्टान्मन्येत प्रथमस्याह्नः प्रातः सवनं चतुर्थस्य माध्यन्दिनꣳ सवनमिति चाह नो खलु बृहत्पृष्ठेषु राथन्तरं प्रातःसवनं विद्यते न रथन्तरपृष्टेषु बार्हतं तदुभयं वा न्यायप्रत्ययोपनयेदुभयं वा देशबलः कुर्यादथापि यो द्वादशाहस्य दशाहानीति चापि चान्यान्द्वादशाहविचारान् यथाविराट् सम्पन्नमनुरूपाग्निष्टोमसामानमिति व्यूढात् प्रतीयन्नथेमांत्स-मूढान् प्रतीयात् सदृशव्याघात् २
अथैष आवापवानेकाह ऋत्विजमकाम्यमपोह्यान्यं चरयिष्यत इत्येवमर्थो भवत्यथैते वाचस्तोमा बह्वन्यादित्याहानि भवन्त्येकं कल्पाहस्तेनैवैकाहा वचनीया न दीना अन्यैवेयं तृतीया जातिभवति तद्यथा चातुर्मास्यानि राजसूयं च नैवैकाहौ प्रतिजानते नाहीनौ तादृशमेतद्भवत्यथ यावद्भिरुद्गातृयुगैरथ व्यवच्छिन्नानि स्तोत्राणि वर्त्तिष्यमाणानि मन्येतादित एव तावन्ति वृणीत तेषाꣳ सर्वेषाꣳ सोमप्रवाकप्रभृतिकर्म्मस्यान्ते सर्वे सर्वाण्युद्गातृकर्माणि कुर्युर्यथा द्वियज्ञबाहुयज्ञेषु सर्वे यजमानाः सर्वाणि याजमानानि कुर्वन्ति तादृशमेतद् भवति स्तोत्राङ्गाणि तु न सर्वे कुर्युर्य एवोद्गाता स्तोत्रादिं भजेत् स स्तोमं युञ्ज्याद्यः स्तोत्रान्तꣳ स यजमानं वाचयेत् केन न्विमानि स्तोत्राङ्गाणि न सर्वे कुर्य्युर्यथा न सर्वे सर्वꣳ स्तोत्रं भजन्त एवमपीमानि स्तोत्राङ्गाणि न सर्वे कुर्युः केन न्विमानि स्तोत्राणि वर्त्तिष्यमाणानि मन्येताभ्याहारावृत्तिभ्यामिति मन्यन्ते तावत्कृत्वो ह्युप-निवर्त्तन्ते तावत्कृत्वः स्तुवतइति स्तुवतइति ३
अथैते षडहविचारेषु यत्र प्रत्यह्वाणीत्याह रेवतीस्तोत्रैके प्रतियन्त्यथ यत्र

परोक्षाणीति तत्र वारवन्तीयं प्रत्यक्षमित्युक्ते किमन्यद्रेवतीभ्यः प्रतीयामिति तासाꣳ हि पृष्ठवादा विद्यन्तेऽथापि पृष्ठ्यस्तोमात्पृष्ठानि च्यावयन रेवतीश्चावयति तथा परोक्षपृष्ठोपाङ्क्यपृष्ठयोरनुगृहीतपरोक्ष इत्ययाप्य-नुगृहीतपृष्ठे रेवती रेवानुगृह्णातीति द्विपृष्ठमेतदहर्भवतीत्यपरं तद्यथा बहव एकाहा उभयसामतो भवन्ति तन्माध्यन्दिन एव सतीनाꣳ रेवतीनां पृष्ठवादास्तद्यत्रैव सतीनाꣳ रेवतीनां पृष्ठवादास्तत्र सꣳशयेत् प्रत्येतव्या इत्यथापि वारवन्तीयस्यैव पृष्ठवादा विद्यन्ते रेवतीषु वारवन्तीयं पृष्ठं भवति तद्वारवन्तीयेन पृष्ठेन स्तुवत इति स यो वादबलः स्याद्वारवन्तीयमपि प्रत्यक्षमेव मन्येताथापि यत् प्रकृते षडहे तदन्यतरादाने प्रत्यक्षं वचनीयं कर्म हि वादेभ्यः प्रमाणतरं भवतीत्येतेन मन्यन्त उभे एवैते प्रत्यक्षे भवतस्तयोस्त्वन्यतरमितरेषां पृष्ठानामनुधर्मि करोति तत्र न परोक्षपृष्ठयो रेवतीरनुधर्मिकरोति वारवन्तीयमनुरूपाग्निष्टोमसाम्नि ब्रह्मसाम पृष्ठ्ये च षडह एतत्प्रमाणा एवेतरेषु षडहविचारेष्वन्यतरदनुधर्मि कुर्युर्यतरस्मिन् साधीयोऽनुधर्मित्वमुपपद्यतेति ४

कथमु स्वित् षाडहिकानां पृष्ठानां पवमानगतानाꣳ साम्प्रयोगिका धर्मा इति न क्रयेरन्नित्येके स्वस्थानानि हि भवन्ति स्थानस्था धर्मा इत्यथापि कथमु केवलस्तोत्राणिधर्म्माँल्लभेरन्नित्यथाप्यनन्ततरांश्चेज्जपाञ्जपेद्व्यन्वेयु स्तोत्रं जपाद्यद्यु वै पुरस्तात्स्तोत्राच्चोपरिष्टाणां पुरस्ताज्जपात् जपेदुपरिष्टाज्जपान् व्यन्वेयुर्जपादन्यानि मामानीति कर्त्तव्या इत्याचार्याः सम्प्रयोगाद्ध्येषामेते धर्मा भवंतीत्यथापि स्थानादपेतानां क्रियमाणान् पश्यामो ब्रह्मसामपृष्ठ्ये च षडहे ब्रह्मसामानि पृष्ठानि पृष्ठानि ब्रह्मसामानि सस्तोत्रीयाणि सधर्माणीत्यथापि स्वःस्थानानि च भवन्ति होतुः स्तोत्रमपन्नान्यथापि स्वस्तोमानि भवन्त्यथापि स्वप्रतिपत्कानि भवन्त्यथापि सꣳशयो लोपो लोपान्न्यायतरो भवतीति यथा एतत्कथमु केवलस्तोत्राणि धर्म्माँल्ल-भेरन्नित्येके केवल स्तोत्रैवै खलु बृहद्रथन्तरे व्रते धर्म्माँल्लभेते यथो एतद्व्यन्वेयुर्जपान्यन्यानि सामानीति व्यवैति वै खलु बृहद्रथन्तरयोर्जपान् व्रत एतेन संयुक्तेषु व्याख्यातं यथा विश्वजिति विश्वजिच्छिल्पाप्तोर्याम इत्यावापभूतानि गर्भभूतान्याप्तोर्याम इति गौतमस्तेनाकर्त्तव्या इत्यथा-

नुगृतीत पृष्ठ्ये च षडहेऽनुगृहीतबृहद्रथंतरे च नोत्तरे चतुरहे बृहद्रथंतरयोः साम्प्रयोगिका धर्माः क्रियेरन्निति मन्यंते न ह्यवान्तर्य्यविप्रयोगे बृहद्रथंतरयोः साम्प्रयोगिकाः क्रियंते छन्दोमेष्विति कथं विप्रयुक्तानामपि न क्रियेरन्नित्येके सम्प्रयुक्तानामाम्नातान् कथं विप्रयुक्तानां प्रतीयामेत्यथापि बृहद्रथंतरयोः सम्प्रयुक्तो रेवेतरैः पृष्ठैरथ व्यतिवर्त्तनं च दुन्दुभ्याहननं च भवतो नासंयुक्तयोर्महानाम्नीनां विप्रयुक्तानामपि ध्रुवमुदघोषं मन्यंतेऽपि ह्यसोमे सं स्वाध्याये धर्मो भवतीति नन्वपां निनयं यजुषा स्यात् ५

तान् खल्विमान् षडहविचाराननङ्गभूतस्यैके मन्यन्ते यथा ज्योतिष्टोमविचारान् द्वादशविचारानित्यथ यदि सात्रिक इति न्वनङ्गभूतेनोपपद्यते संवत्सराङ्गभूतस्येत्यपरमत्र च हि बहवः षडहविचाराः पृष्ठ्यमन्तरुपयन्त इति यः साꣳशयिकः संवत्सरोऽथ य एव संवत्सरे षडहस्य पृष्ठतो विचारास्ते विश्वजित इति तु भवति यद्याहीनिक इति तु संवत्सराङ्गभूतेषु नोपपद्यते द्वादशाहाङ्गभूते तूभयमुपपद्यत आहीनिकेऽथ यदि सात्रिक इति तस्माद् द्वादशाहाङ्गꣳ स्फुरत्येतरान् पृष्ठ्यादत्र तर्ह्यादर्शितो भवत्यसाꣳशयितेन च साꣳशयिकानि तज्जातीयानि प्रमातव्यानि भवन्त्युपपद्यते यत्सांवत्सरिकैर्विचारैर्विश्वजितं प्रदिशेत् षडहसाम्नाज्याद्यान्तरं पृष्ठमामनेत् ६

अथैतस्य बृहद्रथन्तरपृष्ठस्य द्वादशाहस्य नानदस्तोत्रीये गौरीवितꣳ षोडशिसाम स्यादित्येके पृष्ठ्यस्तोमेन ह्येवं प्रदिशतीत्यथापि विराजामपाया स्वराजोपयन्तीति हेतुं वदतस्तदेतन्नोपपद्यते बृहद्रथन्तरपृष्ठताञ्च ह्येव समूहं चाभिप्रे पृष्ठ्यस्तोमेन प्रदिशति यो हि सर्वमेव पृष्ठ्यस्तोमस्य प्रतीयाच्छन्दोमवतः सन् दशरात्रस्य सम्भार्याः प्रथमादह्नोपनयेत् कण्वरथन्तरꣳ सप्तमस्य माध्यन्दिनादो मिति ब्रुवन् जामिकल्पमापद्येत नेति ब्रुवन्त्सदृशं व्याहन्यादथापि यत् सम्प्रयुक्ता विराजः स्वराजश्चाभविष्यन्न वैराजपृष्ठादन्यत्र स्वराजोऽभविष्यन्न च वैराजपृष्ठेऽन्यꣳ स्वराड्भ्यः षोडशिस्तोत्रीयसाम्ना स्यादिति नन्वेवं न भवत्येते न मन्यन्ते स्वराज एवेह प्रत्येतव्या इत्येकाहे प्राकृताश्च भवन्ति न्याय्यतराश्चैताश्चैवानादेशे सर्वक्रतुषु प्रतियन्त्येतेनावच्छिन्नस्य बृहद्रथन्तरपृष्ठस्य षडहस्य षोडशस्तोत्रीयो

व्याख्यातो यश्चैव षडहविचारेषु यश्च सꣳसत्स्विति सꣳसत्स्विति ७
अथ छन्ननिधनानीडोपायासूहाकृतिरूपोऽर्द्धꣳ रहस्यवदध्यर्द्धास्वर्हीष्यभि सोमान्त्या पूर्वा वा काशीतारूढवदाङ्गिरसदैवोदाससुज्ञानेष्वेकिने स्वरा सुज्ञाने मा न इन्द्रेति यथा निहतः स्तनेद् गुरुञ्चाभारमभिनिधायाभि त्वा पूर्वेति वषट्कारः कायमायां वाग्गव्यो षु णः सखाय आयाहीन्द्रस्येन्द्रपृत्तु यथाप्सु पिप्पिलमवपद्येतापो वा प्रमित्राय हिष्कृत्य दिवं गच्छा२३ वृष्ट्वा दिवं गच्छा २३ इति वृष्टिकामस्येद्ग्रहकामस्य न कृत्येत्यभि वस्तमिन्द्र जोहार्चिकैकस्तमिन्द्रपरे स्वर्ज्योतिषी पृथक् कुष्ठः को ह्रस्वावृदोपशावदभि त्यमिन्द्र इव दस्यू२ꣳ रमृणा२३४५ सूर्य इव दस्यू२ꣳ रमृणा२३४५ वजिन्त्सुवज्री२३४५ नपिवैव तेषामेकं द्वे पूर्वे वोत्तरे वा सर्वाणि वा समस्यान्नान्तमेव स्वरयेद्यथा वायोभस्त्रमन्वयुरपादकꣳसकिङ्किणीनां पृथक् द्यौतानयोरा३ईन्द्रा३ आ३ ग्ना३ आ३ग्ना२३४५यि सꣳशानेषु यथाधीतं ब्राह्मणस्य सञ्जित्यै विजित्यै सञ्जित्यै सजित्यै जित्या इति क्षत्रियस्य सम्पुष्टयै विपुष्टयै सत्यपुष्टयै पुष्ट्या इति वैश्यस्यौपगवयो रथकामन्तु नानाभिचरणीयेषु वान्यत्राग्निꣳ होतेति यथा महादिवाकीर्त्यस्यात्मतोऽन्ततो निधनं पाहि प्रेतिः कार्त्तयशे च त्रयो विकल्पा दयित्नवेऽहं २३ दयित्नवेऽहं २३ दयित्नवे हं २३४५ एवमेव सामान्ते ना३कमा३ च्छा२३ औ२ हो२वा३ दश दशताः पक्षिणयो दा३श दशता२३ इति वाक् बृहद्रथन्तरयोः ८
अथातः प्रतिहारस्य न्यायमुद्देशं व्याख्यास्याम उत्तमं प्रतिहारस्थानं तत्र पदसङ्ख्याऽनादेशे चतुरक्षरमाद्यं न्याय्यं प्रतीयात् सङ्ख्याविवृद्धिह्रासौ च सङ्ख्याशब्दे चास्तौभिकान्यक्षराणीति विद्यात्तस्य पुरस्तात् स्तोभा न्यायेनोद्गातुरुपरिष्टात्प्रतिहर्त्तुः सप्तानान्तु पुरस्तात् प्रतिहर्त्ता स्तोभं भजते न्याय्यप्रतिहाराणामिडासंक्षाराश्च सूक्तैः स्वारवार्षाहरस्वारकौत्सगोराङ्गि-रसाभ्यासवत्क्रौञ्चानां पञ्चानामुपरिष्टादुद्गाता सौमेधस्यौरणायवयोर्ऋषभ-पावमाने निधन मार्गीयवाणामनेकप्रतिहाराणामुत्तरमसादृश्यात् पूर्वपदेषु पदसदृशगीतीनि विभाग्यानि तत्र पदं पदं विभजन्त उपोत्तमं पदं प्रतिहर्त्तुः स न्याय्य आ सप्तपदाभ्यो धर्म्मविधर्म्मणोश्चैवं चतुष्पदाकारे त्रिपदानां तु तृतीयꣳ स्तोभाद्यदृक्समे द्वैधं बहिर्णिधने दीर्घꣳ सुतमिति यथा

त्रैधमन्तर्णिधने यथा गोराङ्गिरसस्योष्णिहान्तु विभाग्ये तृतीयेऽष्टाक्षरं चतुरक्षरमुद्गातुर्यथा दैवोदाससौमित्रयोर्विच्छन्दस्स्वक्षरवृद्धिर्लोपश्च तत्र गीतेन प्रतिहारं विद्यात्प्रागृच उपायवान्त्स्तोभः पदनिधनेषु यथा गोष्ठप्रतोदयोः ९

द्वन्द्वानामेकार्षेयाणां विच्छन्दसामनुच्छन्दसं विनियोग आपद्येत्ते तु जागते भासवाजजिती विच्छन्दसो भासमनुष्टुभो बृहत्पृष्ठे विषुवति द्विपदा वाजजिच्छन्दो भवति दशरात्रे छन्दसा जाम्यसञ्चारस्थानैश्च समीक्षेत प्रतिहारग्रहणेनेदन्ताॐ साम्नः प्रतीयात्सन्निपाते च पूर्वं क्रमलिङ्गाभ्यां च सङ्ख्यानादेशे वगाद्यमन्त्यमिति दशतः सन्निपातेऽनन्तरायाॐ साम-पूर्वग्रहणेन न्याय्यमग्रान्त्येषु सङ्ख्यानामेकप्रभृतीनां यथासङ्ख्यं पदं प्रतीयादुत्तरयोरिति चैकं चेदार्षेयमुक्तानेकॐ साम ब्रूयात्तावतां ददार्षेयं प्रतीयात् प्रतीयात् १०

बृहद्भारद्वाजमस्य या२३ ज्ञा३ ना वा३ आ४३ इत्यौशनं न्याय्यो वा साकमश्वॐ सया२३ हा३यि तदुक्थेषु वात्समग्नायित्वा शंका३ जराबोधीयॐ स्तोमाॐ रुद्रा२३ वारवन्तीये वारवन्तं वन्दध्या नमोभिः संस्राजन्तामित्युत्तमे स्तोभौ वेहेति तदनादेशे सैन्धुक्षितमाच्छानाप्त्रे२३ खल्वेतस्याॐ सैन्धुक्षितं स्वारमुक्थेष्वैडं पावमानेषु चतुर्द्धा स्वारं माध्यन्दिनमापद्यतेऽभिषेचनीये गोसवयोश्चन्दोमपवमानयोश्चाच्छानप्त्रो२३ हा इहवाहामदेव्यमग्निर्नो वꣳसता२ई यामे समूहरूपाणि तयोर्न्याय्यौ काशीतꣳ शंयोरभीं तदभिप्लवस्वरसाम्नोर्गोराङ्गिरसस्य सामो होइ हू३ वा२३ यि हुवए गोषाताय यज्ञायज्ञीयं दा३साम्नार्मेधमूर्जाम्पाता चतासृभा इति च स्तोभान्तौ भरद्वाजस्य पृश्निरेवात्पा२ वा३ होवा३ हाइ पौरुमद्गं दिवास्पायौवा ओ२३४ वा माण्डवमद्यादा२३ यिवाꣳ गौतममायिवासा३ हा हो३ दैर्घश्रवसं मधो३र्न पा३ माया इति च पौरुमीढमग्निः सू२३ दी मानवे यन्नमस्या२३ यन्नामा२३ स्या३ इत्युत्तरे तदनादेशेऽन्यत्र पृष्ठ्याभिप्लवयो-रभीवर्त्तलोकात् ११

समन्तं यक्षा३यि या३सी२३ हो३ वा३ हा३यि श्यावाश्व मिडा३ स्पदा३यि सर्वं पदं न्याय्यो वेमॐ स्तोमं यज्ञसारथि वसिष्ठस्य वैराजमन्त्यं तन्मरायं

भरद्वाजस्य प्रसाहमन्त्यं त्वेषस्ते यामं बृहदाग्नेयं वा३ सा२३उवा३ यद्वाहिष्ठीयमुत्तरं त्वद्वा३जा३ बृहदर्च्चमहिषीवेति च त्रिपतिहारं चेद्वि-शोविशीय मो३ हुवा३यि शू२षा३ पूर्वो वा द्व्यक्षरस्तोभान्तः परो वा द्व्यक्षरस्तोमादि रात्रेयं मर्त्ता३ सो३ दा३ आरूढवदाङ्गिरसमासिते तयोर्न्याय्यावुत्तरं द्विरष्टमे छन्दोमवतो दशरात्रस्य नवमपौण्डरीकस्य पूर्व-पूर्वमतोऽन्यत्र श्रुधिया इति शुध्यमष्टाक्षरो वा ककुप्सु नाना पद्यः षोडश बृहतीषु दश नदं व इति चतुरक्षरो गायत्रीषु प्रमꣳहिष्ठीयमुपा३ औ३ हो३ गायत्री सामासितमुपा३ हो३ ई स्तुता३ हो३ वाजभृद्यास्या३ हा३त्वा३ꣳ सा३ सौभरं दे३वत्रा२ हव्य मू३३ हा३ साध्य मा३ स्यया३ज्ञा२३ अगस्त्यस्य राक्षोघ्नो मन्त्यं यद्वा उ विश्पतिरिति १२

शंयद्वा औ३हो३यिगा२वा३यि तदनादेशे शंयद्वा२३इवे ३ आश्वं ते२ननूना२३म्मा३ ऐटतं महीया३क्षान् उभाकर्णेति च दावसुनिधने न्याय्य इडानाꣳ संक्षारे च स्तोभादिर्गौषूक्तꣳ स्तो२ता२ मे२गो२सखौ३ हुवा३इ हुवा३इ आश्वसूक्त मा३इस्तोता२३मा३इ गो२ गारं मा३ना३भा३या३न् सौपर्णानामैडꣳ साप्तमिकꣳ स्वारं नावमिकं निधनवदाष्टमिकं तद्विलम्बसौपर्णमाद्ये न्याय्यो द्व्यक्षरौ परयोः शाकलꣳ सा३र्वा२ मुष्णिक्षु रोहितकुलीये वा३ र्षी३वा३र्षी३ष्ठा३मू२ इत्युत्तरे तदनादेशे दार-सृद्विद्वा३३ईसू३वा३३ ऐध्मवाहमनादेशे येषा२मिन्द्रो२युवा२इहा३ये३-षा३मा३यिन्द्रा३ओ२३वा३ इत्युत्तरे समस्य मरुताꣳ सावेशीयꣳ हावि-ष्मतहाविष्कृतयोर्न्याय्यौ काक्षीवतं य औहो३वा३ दक्षणिधनं तन्मोक्षं परा२दू३ष्वा३हो३वा३ हा३ औपगवे ते सौश्रवसे इन्द्रो२ रा३ यिन्द्रा३-यवा२शा३इरा३ इति न्याय्यो वा पूर्वमुष्णिग्द्विवष्टाहोत्रीयं निधनकाममिहा२ हो३ वाजदावर्य्यः क्षू३मा३ १३

इति उपग्रन्थसूत्रे तृतीयः प्रपाठकः

अथ चतुर्थः प्रपाठकः

हरिः ॐ

वैतहव्यं यदोकोनिधनꣳ शा३ता३क्रा३तू३ꣳ षडक्षरो वा गौरीवितं

तच्छाक्त्यं दा३ना३या३ता३ चतुरक्षरो वा कारावं का२३ ग्वा३ः श्रीतकक्ष मा॒ऽर्कमर्चा३हा३ दैवोदास॑ रात्रिषामै३२ हो३यि मा३स्या३ शाक्वरवर्णँ साद्यष्केषु जुहू२मा३सा३ औदल॑ सुदुघा२मा३ इति न्यायो वार्षभं त्रा३म्पा३ कौत्सेऽपरे तयोर्न्याय्यौ पूर्वमनादेशे सौमेध॑ सरता॑ य आ३ दैवातिथ॑ हयायि सा३खा२ यस्तो२ मवा३ औ३हो३ क्रौञ्च॑ षष्ठे गायत्रीसाम पिबा२ तु वस्या३ गवा३हा३यि घृतश्चुन्निधनं माधुच्छन्दसं पिबा३ तुवौ२ हो२वा२हा३ आकूपार॑ रात्रिषामै२ हो३यि महा२ हस्ता२दक्षा३ हो३ई गौरीवित॑ सूनु॑ सत्या३ वामदेव्य॑ ष्ठयौहो३ हुम्मा२ न्याय्यो वा सत्रासाहीय॑ सियौ२३ होवा१ हा३ यिया न्याय्यो वा त्वाष्ट्रीसाम गायत्रीषु वन्वाना३ सा३ श्चतुर्थे त्रैककुभे प्रतीचीनेडङ्काशीतं प्रनआ२यू॑ ३षी ३ ता३ साकमश्वं तद्धुरा॑ साम वयमिन्द्रा३ स्मसि स्थातरिति च स्तोभान्तो हरिश्रीनिधनमिन्द्रा३त्वा३दा३ आ त्वा सिन्धुषाम सौमित्रं वा३जी३ आमहीयवमुक्थेष्वा३ईवा३ ते२रान् १

श्यैत॑ सहस्रे२णा३यि वा२३शा३ आभीवर्त्त इन्द्रा३ङ्गा३इर्भीं३ नौधस मा३यिन्द्रा३म् क्षुल्लककालेय॑ हुवे२हो३यिभा१राम् कालेय॑ हुवा३यि भरौ३वा३ ओ३ वा३ गौशृङ्गं ने२मिं तष्टे२ वसो३वाऽ ओ३ वा३ पृष्ठमस्मा२॑ आ३वा३ जमदग्नेरभीवर्त्तोऽस्मा॑ ३ ओ१वा३ हा३ कौल्मलबर्हिष मै१हो३ यि गाविष्ठया३यि षडक्षरो वा स्तोभान्तो जनित्रे वा३यिश्वे२३हो३यि पिबा२३हो३वा३यिश्वे१ पिबन्तुकौ२३हो३ अनुपूर्वमौपद नवसप्तदशयोः पूर्वमतोऽन्यत्र मैधातिथ॑ रा३यि षाउवा३णया३ता३उवा३सचा सुत इति च वैखानसं तस्योत्तमः पादः प्रागभ्यासाद् भारद्वाजं वहा३न् भू३सो३ कणवबृहत्तस्यैष एव स्तोभान्तो गौङ्गव मा३यिन्द्र व्रवा३ ओ३हो३ इन्द्रस्य यशोऽनू२३ हो२३ साध्र मा३ना३ ओ२३ वा३ता३श्चा३ ओ५ वा३यौक्तस्नुच मा३यिन्द्रा२३ गौतमस्य मनाज्यं कणवे २ षुमू२३४५ २

हारायणं वायिदा२३॑ षडक्षरो वा स्तोभान्तो वरुणसाम स्तो२त्र॑ रा२जसु गा२यत स्तो३ द्व्यक्षरो वाभ्यासादिर्वषट्कारणिधन॑ सन्त्वा स॑शानानि वासिष्ठं जी२वा३ ज्यो३ती३र्नवतन्त्र एवाष्कारणिधनं च कारावमभिनिधनं च दिङ्निधनं महावैष्टम्भं तयोर्न्याय्यावाद्ये द्व्यक्षरो द्वैगत॑ सुता३ पूर्वो वा

दशाक्षरः श्रायन्तीये प्रतिभा२गं न दी३धिमः प्रा३ती३ द्व्यक्षरो वाभ्यासादिश्चतुरक्षरो वा प्राग्घिङ्काराद् वाम्र मा३यिन्द्रो३हा३री३ पूर्वो वा द्व्यक्षरो वैयश्वे परा३ मा३ ज्या३स्तच्छौल्कं नवमतन्त्र एव वासिष्ठ मा२नू२ना३४५न् भू३ तदनादेशे पौरुहन्मनं तस्योत्तमः पादः प्रागभ्यासादनूपं तद्वाध्यश्वं चन्द्रा३ यिर्मा२३ती२३ नैपातिथ मसा३ यिप्रा३शा२३हा३ औ२हो२३हा३ यज्ञं विपा२ गिरौ३वा३ ओ१३ वा३ धर्त्ता२ष्वौ३ वा३ ओ२३४ वा३धि वैयश्वं धियाःशविष्ठ आ२३ हो३ई बार्हदुक्थं नकिष्टा३दा३ वाशं मन्दा१ना शी३३ माधुच्छन्दसमुपा३स्वा३सा३ औ२हो२३ वा२हा३ ३
असावि निहव औरुक्षयँ सृजा३द्वा रा२३ पूर्वं वातः पदं पार्थ मो२३ हो३हो३यि जगृह्मा वात्सप्रे तृतीयोत्तमे उत्तममनादेशे नाके यामं परिगणेषु ब्रह्मयज्ञानमृतुसामनी वृत्रस्य द्यौतानं त्य मु ताक्ष्र्यसामनी वार्त्रतुरं विसा३यिना३भिर्भयमा३ना३न् उद्वँशीयमुद्वँश मी१ वया१३ यि मी२३ रे चतुरक्षरो वाभ्यासादिरैयावती आष्टादँष्ट्रे पूर्वँ सकृदुक्थेऽहीन-रात्रावुक्थं द्विरुत्तरमभिप्लववैदत्रिरात्रयोर्ज्योतिष्टोमे च पूर्वेण विकल्पो महावैश्वामित्रे गौतमं धा२रा३ औ२हो३ वा३ ऋता३ औ२हो२२वा३ वसिष्ठस्य प्रियं धा३रा२ ओ२३वा३ आ३र्त्ता३ ओ१२३४वा३ आकूपारमनादेश उभयाँ हा३ वीङ्कं तस्यैष एवोच्चादिस्तैरश्चयँ रा३या३स्पू३र्द्धी२३ हा२३ हा३ यि वैश्वामित्रँ रजा३ः सूर्य्यौ३वा३ ओ३वा३ शुद्धाशुद्धीये तयोर्न्याय्यौ पूर्वमनादेशे नानद मा३ पश्चादा३ मधुश्चयुन्निधनं दा३यि वे२ षुधा३ हा३हा३ औ३हो३वा३ आ यिही३ मारुतं धर्त्ता३वज्री३वा३ ओ२३वा३ त्रैशोकमुतो३हा३यि शैखण्डिनमच्छ त्रासदस्यवमुत्तरं वैघनँ सोमसाम यस्यघायो२ नदि चरन्तीतो१ मा३नु१षमो३ हा२हो३यि वरुणसाम विष्का३भा३यिते३ श्येनः सम्रौ३ हो३भद्रौ३ हो३ पूर्वो वाताः पदे ४
क्रोशँ स्या३दा३क्षा३स्या३ कौत्सँ रात्रिषाम महा१ँ हा३यि षाः३ पूर्वं वा चतुक्षरं तदोकोनिधने हारिवर्ण मुलो२का३ कृ३ हो३वा३हा३ त्रैतं यद्वा२ मरुत्सुमा२दासो३हा३यि मारुतं चो१ दयता३यि मा३ह३ वैश्वमनसँ स्तिया३ये३ सौमित्र मौ हौ सो३यि औ३हो३ इओ१२३४५ वा६५ त्रैककुभं तृतीयँ ष्का१३ता३ आक्षारं यद्धा३२३ॗसि वात्र दैवोदासे यस्या३२३ या

२३ सांवर्त्तं गिरा३यिर्न वौ२ हो३ वा३ सहो दैर्घतमसं सोतुर्बा२ हुभ्या३ऌसुयता३३ः सुयता३ः शार्करं निना३यता३ सू ३ वस्रुषा३यि न्याय्योवा बृहत्कं दृढांची३दा३ः येषिरमू३ दे३ वाग्मा३ प्राहा यातं स्त्रौग्मत मिषा३ऌ स्तो३तृ३ सञ्जय मिषऌ स्तोतृ३भ्या३ आ३ सौहविषाणि पू२ष्णे२भा३ हा३यि तदनादेशे पू२ष्णे२ भगा२या पू२ष्णौ३ वा३ ओ२३४ वा३ कं पर्यूष्विति मध्यमं धर्म्मविधर्मणोर्द्विपदाकारे दशमैः स्तोभैः षष्ठदशमैर्वा द्वौ चेत्स्तोभविभाग्ये वा पञ्चाक्षरशो वाजिनां साम श्लोकानुश्लोके उद्वंशपुत्रो वा३यि प्रा२यगा२थं गा२३या३४ ता३ गूर्द्दः शिवो२भुवा३ः प्राजापत्यमतिच्छन्दस मयऌ सहोहा इत्यग्निं होतोत्तरे बार्हस्पत्ये अग्नेर्वा राक्षोघ्ने ५

ऋषभाभीकयोरुग्रऌ शा३२४र्मा३ गतनिधनं बाभ्रवमू३ग्रा३ हा३यि शार्मा३ हा३ शैशव मुग्रऌ शा३४३र्मा३ आमहीयव मुग्रं शर्म्मा३ आजिगमिन्द्रा३ या३ पा३ आष्टमिकं सुरूप इन्द्रायमा३ इया२३ इया३ इन्द्राय पौ३ हो३इया संहित मा२३ इन्द्रा३ आशुभार्गवं विश्वादा३ धा३ यौक्ताश्वं औहोहो३ हा३इ विश्वा विश्वा औहोहो३ हा३इ ऋक्पूर्वः परे पूर्वमनादेशे सोमसाम दाइवा वा३इ रा३ हा३उ उत तदनादेशे भासं दा३यि वा२३ पूर्वो वा द्व्यक्षरो ऽद्ध्यर्द्धेडं सोमसाम देश्वावी२रा३ हा३ई क्षुल्लकवैष्टम्भं हरायि रा२३यि ती२३ होवा३ हा३यि पार्ष्ठौहं कनौ३ हुवा३यि हो३ वा३ इषोवृधीय मर्कस्यायो३ च्यावनं ता३यि मा३ हा३यि वैदन्वतानि मदा३इ षु३सा३इ३या३ इति प्रथमे सर्वधा३ असा३ ई उभयतस्तोभे द्वे तृतीयं वासस्तोभमुभौ वा औ३४ हो३ई न्यायेनानुपूर्व मौर्णायवे स्वानैर्या२३ती३ उत्तरमनादेशे अस्तोभावुभयोः ६

शाम्मदे वा३यू३ मारो३४५ अचिक्रदद्वार्षाहरं परिगाणेषु वार्शं पा३न्तमा३ई३४५ या३ वैरूपं त्रा३ आ२३ ना३या२३ द्व्यक्षरो वेहव-द्दार्ढच्युतमुत्तरयोर्द्व्यक्षराऽवयासोमीयं मा२न्दा३नआ३ ये३ सच्छन्दसां सोमसाम्नामानुष्टुभि चाभिषेचनीयगोसवयोरू३त्सो३ दा३यिवा२३ः साद्यष्केष्वायास्य मू३ त्सो३ दे३वा३४५ उद्वत्प्राजापत्यमुत्सा२३हो२३ यिदा३यि वो३४५ आयास्यमेकार्थे त्रिणिधन मा२रा२३ औ१ हो३वा३

उत्सा२३ औ१ हो३ वा३ उभे च तदनुपूर्वं कण्वरथन्तरमुत्सो१ दा३यिवा३ः साप्तमिकमायास्यमुत्सा३ औ३ हो३ सदोविशीयमुत्सो३दा३यिवा२३ स्तोभान्तो हावो प्लवो रौरवमुत्सो२ दे१वो२ हिरा२३ हा३औ३ हा३उवा३ यौधाजयमुत्सा३ अच्छिद्ररयिष्ठयोस्त्रयः प्रस्तावसदृशा आभीशवे दा१ धा३ मुषेति च स स्तोभान्तौ पूर्वं नवमतन्त्र एव द्वादशं माण्डवं तत्सौमक्रतु तवᳯ हा२ चु१ हा३ तु१वा प्रतोदगोष्ठौ चाश्वं जा३ ना३ औ२ चा३ना३ पा३ ओ२३४वा३या३ सदोवन इति चाग्नेस्त्रिणिधन मा३ᳯशो३ः पा२या१ अच्छाकोशमिति च द्विहिङ्कारं वामदेव्यमच्छा१ को१शाम्मधौ२ हो३३हूम्मा२३ न्याय्यो वोत्सेधनिषेधयोर्यथाग्नेस्त्रिणिधने स्तोभान्तौ वैष्णवे परिधीᳯरतिताᳯ२३ परा३ औ३ हो३ अनुपूर्वमेवज्ञातीयान्यौद्दणोरन्ध्रे पवमा२ना३ औ३ हो३ पवमा३ना३ हा३हा३ अनुपूर्वं वाजजितावा२३ हो३ स्वःपृष्ठमाङ्गिरसं मत्सरासो३ ७

औशनमश्वं न त्वा१ वा२जिनं मा३र्जया३न्ता३ न्याय्योवा हाउ वाराह-मङ्गिरसां संक्रोश उहुवायि हाउहुवेति वासिष्ठ अनुपूर्वमष्ठमनवमयोरिहवद् द्वितीयेऽहन्यनादेशे तज्जनित्रं समूढेऽपि च समूढरूपिण्यभित्रिसम्पात् कुत्सस्याधिरथीयं प्रसेनाद्यं प्र ते धारा इत्यतस्त्रीणि विश्वज्योतिषाणि दाशस्पत्यं हन्ता३यि रक्षो३ वरा३यिवस्कृणवन्निति च स्तोभान्तौ दीदिहीति श्रौष्टं तस्य तृतीयं पदं सस्तोभं कार्त्तयशमपश्चारनं श्नथा१३यि ष्ठा३ना३ और्ध्वसद्मनं सा३खा१यो१ दा३यि श्यावाश्वं ष्टा१ना३ आन्धोगवं सा३खा३ उवा३ क्रौञ्चानि प्रथमाष्टमिकं सप्तधान्यत्र च्छन्दोमपवमानेऽन्तर्वसौ चतुर्वीरे षष्ठे षष्ठत्र्याहीनिके सप्तमे त्रैककुभे छन्दोमदशाहस्य द्वितीयेऽहनि विराट् सम्पन्ने षोडशिसाम सकृद्योग्य मो३यि वियरुया३द्रो३ उत्तमं स्वयोन्यन्यत्र प्रायणीयात्तस्यैष एवास्तोभस्त्वाष्ट्रीसामानि पवा३यि त्रवा३दा३यिवा३ नाच्छा३ द्व्यक्षरो वा देश्वा२नाच्छा३ देवा३ हो३यि गच्छो२ हा३ अनभ्यासे वा स्वारे आद्यं तृतीये स्वारयोश्च पूर्वमुत्तरं पञ्चमे सप्तमे चाहनि छन्दोमदशाहस्य चतुर्वीरायुष्कामयोश्च तृतीयेऽहनि विराट्सम्पन्ने षोडशिसामैडमतोऽन्यत्र ८

क्रौञ्चं षष्ठे सुवा३यिया३ अभी३नो३ वा३ इति च पूर्वे परित्यमाकूपारमैडं

काव मे३ वाजजिद्विश्वा२ धना३नी३ काव मा१ऊ सूर्य्यस्य बृहतो३ बृहन्ना३धी३ न्याय्योवोद्वद्वार्गवं सामराजे हा२उ हो२वा३ हा३यिहो३ आ३र्यो३ ना३सा३ परं वा चतुरक्षरं पूर्वनवमतन्त्र एव सिमानां निषेध उत्तरयोद्वर्यक्षरौ चतुरक्षरौ वा वैधृतं वासिष्ठं लौशयोः पूर्वमनादेशे प्रवद्भार्गवं याम मा३ इया३ वृषा च स्वारमनादेशे महस्तं धेनु चा३रू३णा१२३यिचा३ इन्द्रस्यापामीवं वायोरभिक्रन्दो द्रा१ वी३णा२स्वा३ पूर्वं वा पदं हावाञ्जेति शार्गमर्कपुष्पयोः पूर्वमनादेशे पौष्कलं श्रुष्टा३यि शौक्तं शा३यि शा३ओ२वा३ हौ चेच्छा३यिषा३ कार्णश्रवसं शा३यि श्रुनं हवौ १ स्वदया सुज्ञानमग्रे२ वा३ चा२ आतीषादीयं पवमा२ना२ सफं मंहा३यि वाचस्साम वा३ना१प्रा३क्षा३ऊ शंकु वा३ यिश्वा३ वा३ सू३ तत्सीदन्तीयं भरद्वाजस्य लोम सो२३मा३स्तद्दीर्घं गायत्रपार्श्वं क्रीऽ१डा३नू३र्मी२ सन्तनि-नस्त्रयः प्रस्तावसदृशाः ९

यद्योजोरूपे तृतीये दशाक्षरो ह्रस्वा बृहदोपशा न्याय्यो वैरूपे पददैवते व्यत्यस्याश्वायाः पुरस्तात्स्तोभा अन्तरिक्षं पिबा व्यरिष्टं पिबा देवस्थानं तस्य तृतीये चतुरक्षर मन्त्यऊ सस्तोभऊ शन्न आथर्वणमुत्तरयोश्चतुरक्षरौ पुरस्तात्स्तोभौ बृहत्त्वामित्स्वादिस्वाशिरामर्कौ धर्त्तेति दीर्घतमसोऽर्कौ मरुताऊ सऊस्तोभो अग्नेरर्क आज्यदोहान्यृषभरैवते तृतीये मध्यमोऽभ्यासः शाक्वरे चतुर्थऊ सस्तोभ मान्धान्तास्त्रयोऽतीषङ्गे धर्त्तेतिपदस्तोभा द्वा-दशनिधनाः स्तोभैः पूर्वेण वाद्ये परेणान्त्ये विभाग्यस्त्वेव प्रागन्त्यात्पदभाज इडे चाभितः प्रथमे युजश्चोत्तरे शेषे पदमध्ये उत्तमेऽयुजश्चत्वारि त्र्यक्षराणि युजस्तच्छेषः पदमिडा च चतुरक्षरशो वायुजौ द्वैधमितरौ सऊसर्पाणि सर्पसामानि लिङ्गतो नियमस्त्वं तूर्यस्त्रिषन्धि परो वा वामदेव्यसदृश एकवृषा त्रिरुक्ताद्यमो वान्ता न च कृष्टैकवृषस्योपायवन्तः स्तोभाः पदानां निधनत्वाद्रेवती तूत्तरयोश्चतुरक्षरावुच्चा शाक्वरवर्णं तस्योत्तमायाऊ षडक्षरः स्तोभान्तो नित्यवत्सास्वतीषङ्गवत्पञ्चाक्षरो रथन्तरे सप्तहऊ सामनी त्रया-णामाद्ये कया पञ्चनिधनं वामदेव्यं पिबा वैराजं तस्य तृतीये मध्यमो-ऽभ्यासस्तोभो विभाग्यं वा १०

द्वन्द्वाद्ये प्राणापानौ पञ्चमषष्ठे व्रतपक्षावुप त्वा बलभिदी भर्गयशसी प्रसोमद

इति घर्मस्य तन्वी वार्षाहरे त्वमेतत्तौरश्रवसे यदिन्द्रशोत्तरेऽष्टाक्षरो नानापद्यो धेनुपयसी चतुर्थ्यां यशवापत्ययोरुत्तरयोः स्तोत्रीययोः सस्तोभे मध्यमे पदे आयुर्नवस्तोभे रायोवाजीयबार्हद्गिरयोः षडक्षरः स्तोभान्तः संकृतिनि चतुर्थे स्तोभाः पार्थुरश्मे प्रस्तावसदृशाः श्येने च भद्रश्रेयसोरष्टमैः स्तोभैः पञ्चमाष्टमैर्वा द्वौ चेद्वार्कजम्भे प्र व इन्द्रायेत्युत्तरं विभाग्यं नाके यामं परिमात्सु प्रथश्च वसिष्ठशफौ शुक्रचन्द्रे स्वराणि यज्ञायथाश्चत्वार्य्युत्तमे विभाग्यः ११

सत्रस्यर्द्धि चतुर्थमन्त्ये सोमव्रते सार्पराज्ञीष्वग्निमीडे यामं तस्य तृतीये कृष्णान्त इमा उ वामश्विनोर्व्रते गवामुत्तरे समं न्यायन्तीत्यपांव्रते अहोरात्रयोरुत्तरे राजनरौहिणे चतुर्थ्यन्ते इलान्दं पञ्चानुगानं विभाग्यमविभाग्यं चेदाद्य उत्तमानाꣳ स्तोभानां मध्यमेन स्तोभेन प्रतिहार उत्तमस्यानुगानस्य षडक्षरस्तोभान्तो वसन्त ऋतुष्ठा यज्ञायज्ञीयं कया पुरुषव्रतमेकानुगानं लोकसमान्यश्यस्य साम प्रजापतेर्हृदयम् १२

शुक्रियाद्यमग्नेर्व्रतं भ्राजाभ्राजे विकर्णभासे महादिवाकीर्त्त्यं पञ्च तस्यात्मा स्तोभविभाग्यो द्विप्रस्तावं चैतस्मात्तस्याद्ये देवते विपरिहरेदाद्यन्तसमाधये तृचस्थाः षट् परिधयः प्राक् परिधिभ्यो धर्म्मरोचनमिन्द्रस्योत्तरं महानाम्न्यः सिमाः शक्वर्य्यो मह्या वचनाद् द्विप्रस्तावा द्विपदायाः प्रस्तुत्य शक्वर्य्याः प्रस्तौत्यूधसोऽतीषङ्गवदूर्ध्वं पुरुषात् षडक्षरञ्चैके स्तोभान्तं प्रस्तावं चाध्यास्यापुरीषपदेषु पुरीषपदशेषाणि निधनान्याचार्याः स्वरितान्तानि यथाधीतं तेषु पाञ्चविध्यं चेद्धोयिकाराद्वागन्तो वागतः १३

इति उपग्रन्थसूत्रे चतुर्थः प्रपाठकः । ग्रन्थश्च समाप्तः

Satyavrata Sāmaśhramī, ed., "Sāmavedīyam Upagranthasūtram," *Ușhā* 4, Calcutta, 1897, cited by Gonda, Jan, in *The Ritual Sūtras* p. 537.